# Sivakarnamritam







BY

## APPAYA DIKSHITA





SRIRANGAM:
SRI VANI VILAS PRESS.
1913.

# ॥ शिवकर्णामृतम् ॥

श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य

विश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुभिः

श्रीमदप्पयदीक्षितेन्द्रैः

विरचितम् ।



श्रीरङ्गम्

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितम् ।

१९१२.



॥ श्रीः ॥

# ॥ शिवकर्णामृतम् ॥



निजपदलोकने सति नृणामितरैः सुकृतै-
रलमिति बोधमादधदिवाभयमुद्रिकया ।
कनकसभाविभासि करवै पुरवैरि महः
स्थिरभवरोगहारि करुणाभरणं शरणम् ॥

जन्मस्थेमलयं समस्तजगतां यस्यैव लीलायितं
यस्मिन्नायतते भवस्थिरमहारोगक्षयः प्राणिनाम् ।
तद्ब्रह्माच्युतपूजिताङ्घ्रिकमलं विश्वाधिकं शाश्वतं
साम्बं ब्रह्म सदाशिवाख्यमनिशं पश्येयमन्तर्दृशा ॥

सदाशिवः परं ब्रह्म साम्बमूर्तिः सनातनः ।
विभूतिलेशस्तस्यैष प्रपञ्च इति वैदिकाः ॥

पाञ्चरात्रस्थितास्तस्य परभावे धृताक्षमाः ।
विष्णोः परत्वे वेदानामपि तात्पर्यमूचिरे ॥

तन्निरासप्रकारोऽत्र संक्षेपेण प्रदर्श्यते ।
शिवतत्त्वविवेके यः प्रपञ्चेनोपपादितः ॥

तं खल्वेवमाहुः— 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' 'द्यावाभूमी जनयन्देव एकः' इति, 'जन्माद्यस्य यतः' इति च श्रुतिसूत्राभ्यां व्यवस्थापितं जगज्जन्मादिकारणत्वमेव परस्य ब्रह्मणोऽसाधारणं लक्षणं श्वेतच्छत्रमिव मूर्धाभिषिक्तस्य । मन्त्रार्थवादेषु वैभवान्तरोपवर्णनं तु देवतान्तराणामपि साधारणं करितुरगवरभूषणादिकमिव सचिवादीनाम्; 'हिरण्यगर्भः समवर्तताग्रे' 'नकिरिन्द्र त्वदुत्तरः' 'विश्वस्मादिन्द्र उत्तरः' 'इन्द्रो यातोऽवसितस्य राजा' 'अग्निर्मुखं प्रथमो देवतानाम्' 'अग्निरग्रे प्रथमो देवतानाम्' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' 'अग्निः सर्वा देवताः' 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्येवमादिदर्शनात् । एवं च यद्यपि मन्त्रार्थवादेषु तत्र तत्र शिवस्य वैभवान्तरमुपवर्ण्यमानं दृश्यते, तथापि 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी' इत्यादिमहोपनिषद्वचनजातेन, 'पुरुषो ह वै नारायणोऽकामयत । प्रजाः सृजेयेति...नारायणाद्ब्रह्मा जायते नारा-

यणाद्रुद्रो जायते' इत्यादिनारायणोपनिषद्वचनजातेन, 'नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः' इत्यादिसुबालोपनिषद्वचनजातेन च जगज्जन्मादिकारणमनितरसाधारणनारायणशब्दवाच्यः पुरुषोत्तम इति प्रतिपादनात्स एव परं ब्रह्मेत्यवसीयते; 'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुत्यन्तरकारणवाक्येषु श्रुतस्यापि कारणपरस्य सद्ब्रह्मात्मादिसामान्यशब्दस्य 'अग्नीषोमीयं पशुमालभेत' इति विधिवाक्यपठितस्य गवादिसाधारणस्य पशुशब्दस्य 'छागस्य वपाया मेदसः' इति मन्त्रप्रतिपन्नच्छाग इव पुरुषोत्तम एव 'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्यायेन पर्यवसानात् ॥

ननु 'अहमेकः प्रथममासम्' इत्याद्यथर्वशिरसि देवान्प्रति शिवस्य वचनेन, 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी' इति श्वेताश्वतरोपनिषन्मन्त्रेण च शिवस्य सर्गाद्यसमये तमोमात्रावशिष्टे सर्वकारणभावेनावस्थानमुपदिश्यते; 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो देवः

शुभया स्मृत्या संयुनक्तु' इति तैत्तिरीयमन्त्रेण सर्वादिभूत-हिरण्यगर्भजनयितृत्वप्रतिपादनेन सर्वकारणत्वं प्रत्याय्यते; अथर्वशिखायां तु 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति ब्रह्मादीनां कार्यत्वमुक्त्वा, 'कारणं तु ध्येयः सर्वैश्वर्य-संपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इति वाक्येन तस्य सर्व-कारणत्वं साक्षादेव प्रतिपाद्यते । अतः कथमिह छागपशु-न्यायात्पुरुषोत्तमे सर्वकारणवाक्यानां पर्यवसानमवधार्यते? उच्यते; इत्थं ह्यथर्वशिरसि श्रूयते— 'देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्र-वीदहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशद्दि-शश्चान्तरं संप्राविशत्सोऽहं नित्यानित्योऽहं ब्रह्माहं प्रा-ञ्चः प्रत्यञ्चोऽहम्' इत्यादि; अत्र रुद्रस्य सर्गाद्यसमये सर्वकारणभावेनावस्थानस्य सार्वात्म्यस्य चोपदेशो न स्वा-त्माभिप्रायेण; किं तु 'अहं मनुरभवं सूर्यश्च' इति वामदेवसार्वात्म्योपदेशवत् स्वान्तर्यामिपरमात्माभिप्रायेण । अत एव परमात्मनः खलु कारणत्वादि प्रसिद्धम्, तव कथमहमेकः प्रथममासमित्याद्युक्तिः? इति शङ्काव्यवच्छे-दाय रुद्रस्यैवेदं वचनम्— 'सोऽन्तरादन्तरं प्राविशद्दिश-

श्चान्तरं संप्राविशत्' इति; अत्र 'सः' इति परमात्मा तच्छब्देनोच्यते, बुद्धिसंनिहितत्वात्— अन्तर्यामिब्राह्मणोक्तरीत्या सर्वशरीरगस्य परमात्मनो देवमनुष्यादिशरीराधिष्ठानद्वारा देवमनुष्यादिशब्दवाच्यत्ववत् तच्छब्दवाच्यत्वस्याभ्युपगमेन, पूर्ववाक्येऽहंशब्दस्य स्वशरीरगतपरमात्मपरतया प्रकृतत्वाद्वा; तथा च स परमात्मा अन्तरात् प्राणादपि अन्तरं स्वात्मानं दिशश्च सकलदिग्वर्तिवस्तुजातस्य चान्तरम्, जीववर्गमन्तर्यामिभावेन प्राविशत्— इति तस्यार्थः । ततश्च तदभिप्रायेणैव मम सर्वकारणत्वाद्युपदेश इति भावः । न चेदं वाक्यं रुद्रस्यैव सर्वान्तर्यामितया प्रवेशकथनपरम्, पूर्ववाक्यमपि तस्यैव सर्वकारणत्वादिकथनपरं किं न स्यादित्याशङ्क्यम्; तथा सति अस्य वाक्यस्य रुद्रवचनतया अहं प्राविशम् इति प्रयोगापत्तेः । न च 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्येतदनन्तरम् इतिकरणेन रुद्रवाक्यसमाप्त्यवगमात् 'सोऽन्तरात्' इत्यादि श्रुतेर्वचनमेवेति वाच्यम्; 'संप्राविशत्' इत्येतदनन्तरमपि 'सोऽहं नित्यानित्यः' इति रुद्रवचनानुवृत्त्या तत्समाप्त्यसिद्धेः; अन्यथा मध्यगतश्रुतिवचनेन रुद्रवचनसंदर्भविच्छेदे उत्तरत्र पुनः 'सः' अब्रवीत् इत्यस्यापेक्षितत्वेन तदध्याहारप्रसङ्गा-

त् । इतिकरणं तु 'सोऽन्तरात्' इत्यादिवाक्यान्वयितया परमात्मानुप्रवेशेन हेतुना 'अहमेकः प्रथममासम्' इत्युक्तिरिति हेत्वर्थकत्वेनाप्युपपन्नम् । समाप्त्यर्थकत्वे तु अस्य कृत्स्नरुद्रवाक्यपरिसमाप्तावन्वयोऽस्तु, अध्याहाराद्व्यवहितान्वयस्य ज्यायस्त्वात् । एवमस्यामुपनिषदि सर्वकारणत्वेन सर्वात्मत्वेनाग्रे मुमुक्षूपास्यत्वादिना च प्रतिपाद्यमानो रुद्रस्यान्तर्यामी नारायण एव; 'एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालोपनिषदि तस्य सर्वान्तर्यामित्वश्रवणात्; 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' इति महाभारते कर्णपर्वणि तस्य विशिष्य रुद्रान्तर्यामित्वस्यापि प्रतिपादनाच्च । 'यदा तमः' इति श्वेताश्वतरमन्त्रोऽपि 'यदा' इति कालविशेषप्राप्तस्य तमसोऽनुवादकत्वात् तत्प्रापकम् 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति' इति सुबालोपनिषद्वाक्यमपेक्षत इति, अनुवादस्य पुरोवादसापेक्षत्वात्, तस्यां तमसोऽधिष्ठातृत्वेन प्रतिपादिते नारायण एव सोऽपि मन्त्रः पर्यवस्यत्युपजीव्यपुरोवादाविरोधाय । ननु 'तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाति' इत्यादिमैत्रायणीयश्रुत्यादिवाक्यमिह पुरोवादः किं न स्यादिति चेत्, न;

तस्यापि सामान्यतः प्रवृत्तस्य छागपशुन्यायात्सौबालश्रुति-प्रतिपन्नविशेषपर्यवसायित्वेनाविशेषात् । एवं च 'शिव एव केवलः' इति मन्त्रस्थशिवशब्दः शुभतया रूढ्या वा देव-तान्तरवाचकत्वेऽपि लक्षणया नारायण एव प्रवर्तयितव्यः । किं च, 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंवि-शन्ति प्राणमभ्युज्जिहते', 'सर्वाणि ह वा इमानि भूता-न्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इत्यादि-वाक्येषु हवैशब्दोपबन्धेन कारणत्वानुवादस्य पुरोवादानुरो-धात् नारायणविषयतया तत्रत्यप्राणाकाशादिशब्दानामचे-तनवाचिनामपि कथंचिन्नारायणे वृत्तिरभ्युपगम्यते, एवं देव-तान्तरवाचितया अनतिविप्रकृष्टस्य शिवशब्दस्य तत्र वृत्त्य-भ्युपगमे को भारः? यद्वा, 'सर्वः शर्वः शिवः स्थाणुः' इति नामसहस्रमध्ये पाठाच्छिवशब्दो नारायणस्याप्यभिधा-यक इति तस्य तत्रैव वृत्तिरुपपन्ना ॥

ननु 'एक एव रुद्रो न द्वितीयाय तस्थे विश्वाधिको रुद्रो महर्षिः' 'मायिनं तु महेश्वरम्' 'तमीश्वराणां परमं महे-श्वरम्' इत्यादिपूर्वापरमन्त्रसंदर्भपर्यालोचनया श्वेताश्वतरो-पनिषदः कात्स्न्र्येन शिवपरत्वं प्रतीयते, तत्र कथम् 'यदा तमः' इति मन्त्रो नारायणविषयः स्यादिति चेत्, न;

'वेदाहमेतं पुरुषं महान्तम्' इत्यादिपुरुषसूक्तपठितानेकमन्त्रसामाम्नानेन तत्प्रतिपाद्यस्य नारायणस्येह प्रत्यभिज्ञानेन प्रतिपाद्यत्वावसायात्, उभयोरपि प्रतिपाद्यभेदे उभयत्र 'नान्यः पन्था विद्यतेऽयनाय' इत्याम्नानायोगात्, द्वयोरितरेतरव्यवच्छेदेन मुक्त्युपायत्वावधारणासंभवात् । तर्ह्येतदुपनिषन्मन्त्रप्रत्यभिज्ञानात्पुरुषसूक्तमेव शिवपरं किं न स्यादिति चेत्, न; 'सहस्रशीर्षा पुरुषः' इत्याद्युपक्रम एव 'पुरुसंज्ञे शरीरेऽस्मिञ्शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥ भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इत्यादिपुराणवचनावगमितनारायणैकान्त्यस्य पुरुषशब्दस्याम्नानेन, मध्ये 'वेदाहमेतं पुरुषं महान्तम्' इत्यत्र 'महादेवं महापुरुषं वार्चयेत्' इति कल्पसूत्रावगमिततन्नामभावस्य महापुरुषशब्दस्याम्नानेन पुरुषसूक्तप्रतिपाद्यस्य महापुरुषस्यैव प्रतिपादकतया तदेकवाक्यतापन्नस्य 'अद्भ्यः संभूतः' इति समनन्तरानुवाकस्यान्ते 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वलिङ्गस्याम्नानेन, छन्दोगब्राह्मणे 'इदं विष्णुर्वृक्षस्य विष्णुः प्रकाव्यमुशनेतिब्रुवाणे इति वाराहमन्त्यं पुरुषव्रते तदिति चैषा वैष्णवी नाम संहितैतां प्रयुञ्जन्विष्णुं प्रीणाति' इति वैष्णव्यां

संहितायां विनिवेशनेन, आथर्वणे अष्टादशमहाशान्तिप्रकरणे तत्तद्देवत्यासु शान्तिषु तत्तद्देवत्यमन्त्रविनियोजनावसरे 'वैष्णव्यां पुरुषसूक्तम्' इति वैष्णव्यां शान्तौ विनियोजनेन, शौनकबोधायनादिस्मृतिषु बहुधा नारायणसमाराधने विनियोजनेन, विष्णुपुराणादिषु पुरुषसूक्तार्थप्रक्रियया नारायणस्तुतिदर्शनेन, 'पुरुषेण नारायणेन यजमान उपतिष्ठते' 'अथ नारायणाभ्यामुपस्थानम्' इत्यादिकल्पसूत्रेषु नारायणसमाख्यया व्यवहारेण च पुरुषसूक्तस्य नारायणपरत्वावसायात्, अनेकप्रमाणव्याकुलीकरणायोगेन तन्मन्त्रप्रत्यभिज्ञानादस्या एवोपनिषदो नारायणपरत्वप्राप्तेः । नन्वस्यामुपनिषदि 'वेदाहमेतं पुरुषं महान्तम्' 'यस्मात्परं नापरमस्ति किंचित्' इति मन्त्रद्वयाम्नानानन्तरम् 'ततो यदुत्तरतरं तद्रूपमनामयं य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति, सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवान्तस्मात्सर्वगतः शिवः' इत्यादिमन्त्राम्नानेन पुरुषसूक्तप्रतिपाद्यान्नारायणादुत्तरतरत्वेन शिवस्य प्रतिपादन एव चास्या आशयः अवसीयत इति चेत्, न; प्रथममेव 'वेदाहम्' इति मन्त्रेण नारायणवेदनस्यैव मोक्षहेतुत्वस्य 'यस्मात्परं न' इत्यनन्तरमन्त्रसंदर्भेण तस्मात्पराभावस्य च प्रतिपादनेन,

तदनन्तरं श्रुतमन्त्रसंदर्भस्य तद्विरुद्धार्थे तात्पर्यकल्पनायोगात् उपक्रमोपसंहारयोर्विरोधेऽनुपसंजातविरोधितया उपक्रमप्राबल्यस्य 'वेदो वा प्रायदर्शनात्' इति पूर्वतन्त्रे व्यवस्थितत्वेन चरमश्रुतस्य 'ततो यदुत्तरतरम्' इत्यादेः प्रथमावगतार्थानुरोधेनैव नेयत्वात् । तस्मात्तत्रोत्तरमन्त्रसंदर्भोऽपि नारायणपर एव; 'तस्मात्सर्वगतः शिवः' इत्येतदनन्तरमपि 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्... पुरुष एवेदं सर्वम्' इति पुरुषसूक्तमन्त्राम्नानात् 'सत्त्वस्यैष प्रवर्तकः' इति सत्त्वगुणोपाधिलिङ्गाम्नानाच्च । तत्र ततःशब्देन 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति पूर्वमन्त्रान्ते प्रथमानिर्दिष्टं विश्वं परामृश्य ततः परत्वं प्रकृतस्य नारायणस्य प्रतिपाद्यते । अथवा ततःशब्दो हेतौ, यस्मात्पुरुषेण सर्वं पूर्णं ततो यदुत्तरतरमिति मन्त्रसंदर्भसंगतेः। एवं च तत्र तत्र मन्त्रे स्थिताः रुद्रादिशब्दा अपि शिवशब्दन्यायेन नारायणविषया एव । एवं चास्यामुपनिषदि कात्स्न्र्येन नारायणपरायाम् 'स कारणं करणाधिपाधिपः' इत्यादिमन्त्रान्तरेणापि न शिवस्य कारणत्वसिद्धिशङ्कावकाशः । 'यो देवानाम्' इति तैत्तिरीयमन्त्रोऽपि नारायणपरः; तत्र यदुपबन्धेन हिरण्यगर्भकारणत्वस्यानूद्यमानस्य 'नारायणाद्ब्रह्मा जायते' इति पुरोवा-

दानुरोधेन तद्विषयत्वप्राप्तेः । ननु तत्र 'अणोरणीयान्' इत्यनुवाकोपक्रमे 'धातुः प्रसादान्महिमानमीशम्' इतीशशब्दश्रवणात्, 'यो वेदादौ स्वरः प्रोक्तः' इति तदवसानमन्त्रे 'यः परः स महेश्वरः' इति महेश्वरशब्दश्रवणाच्च उपक्रमोपसंहाराभ्यामनुवाकस्यैव शिवपरत्वमवसीयते; तत्र कथमयं मन्त्रो नारायणविषयः स्यात्? उच्यते; ईशशब्दस्तावदैश्वर्यगुणयोगेन सर्वत्र प्रयुज्यमानो न क्वचिद्व्यवतिष्ठते; 'यो वेदादौ' इति मन्त्रोऽप्यर्थपर्यालोचनया नारायणपरः । अस्य ह्ययमर्थः— 'प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिताः' इति स्मृतेः वेदानामुत्पत्तिलयस्थानतया तदाद्यन्तयोः प्रतिष्ठितो यः स्वरः ओंकारः तस्य 'अकारो वै सर्वा वाक्' इत्यकारस्य सर्ववाक्प्रकृतित्वश्रवणात्प्रकृतावकारे लीनस्याकारात्मतां प्राप्तस्य यः परः वाच्यः, इदं परः तत्परः— इत्यादौ वाच्ये परपदप्रयोगात्, स महेश्वरः सकलवाङ्मयसारभूतवेदोत्पत्तिलयस्थानभूतप्रणवप्रकृतितया सर्वशब्दोत्कृष्टस्याकारस्य वाच्यः सर्वलोकानां महानीश्वरः— इति । इत्थं सकलवाचकोत्कृष्टाकारवाच्यस्य सकलवाच्योत्कर्षो युक्त इत्यौचितीमवलम्ब्य, अकारवाच्यस्य सर्वेश्वरत्वप्रतिपादकोऽयं मन्त्रो नारायण एव प-

र्यवस्यति; 'अकारो विष्णुवाचकः' इति स्मरणात् । अतोऽयमनुवाको नारायणपरः । अत एवैतदन्तर्गतस्य 'तस्मिन्यदन्तस्तदुपासितव्यम्' इति दहरोपासनाविधानस्य नारायणदैवत्यतया, समनन्तरानुवाके 'पद्मकोशप्रतीकाशम्' इत्यादिना दहरपुण्डरीकसंस्थानविशेषादितदपेक्षितगुणविधायके 'सहस्रशीर्षं देवम्' इत्यादिना नारायणस्य महिमा प्रपञ्च्यते । 'कारणं तु ध्येयः' इत्यथर्वशिखावाक्यं न स्वयं कस्यचित्कारणत्वविधायकम्, किं तु 'कश्च ध्येयः' इत्युपनिषदुपक्रमावगतप्रश्नोत्तरपरतया ध्यानविधानपरम्; तथा च श्रुत्यन्तरेषु सुबालोपनिषदादिषु नारायणस्यैव कारणत्वप्रसिद्धेः कारणपदस्य तत्परत्वावश्यंभावेन तत्समानाधिकृतशंभ्वादिशब्दा अपि तत्परा एव; 'ब्रह्मविष्णुरुद्रेन्द्राः' इत्यत्र विष्णुशब्दस्य भक्तसौलभ्यार्थावतारविशेषपरत्वोपपत्तेः । अतः श्रुतिषु नारायणातिरिक्तस्य कारणत्वप्रतिपादनाभावान्नारायणस्य सुबालोपनिषदादिषु सृष्टिस्थितिप्रलयनिरूपणप्रकरणेष्वेव बहुधाभ्यस्तेन नारायणपदेन कारणत्वप्रतिपादनाच्च सर्वकारणवाक्यानां तत्रैव पर्यवसानमिति युक्तमुक्तम् ॥

ननु, पुराणेषु शैवलैङ्गादिषु सृष्टिप्रकरणेष्वेव शिवस्य जगत्कारणत्वं बहुधा प्रपञ्चितम्; सत्यम्, अनुपादेयं हि

तत् तामसेषु पुराणेषूपवर्णितम्; पुराणानां प्रणेता हि चतुर्मुखः केषुचित्कल्पेषु सत्त्वेनोद्रिक्तो भवति, केषुचिद्रजसा, केषुचित्तमसा; तेषु च कल्पेषु चतुर्मुखस्यैकैकदिवसभूतेषु स्वकीयसत्त्वोद्रेकादिना लब्धसात्त्विकराजसतामसाभिधानेषु वैष्णवब्राह्मशैवादीनि पुराणानि प्रणिनाय; अतः पुराणान्यपि तानि वक्तृगुणानुसारेण सात्त्विकराजसतामसानि गीयन्ते; अतस्तमोदूषितान्तःकरणेन प्रणीतैः शैवपुराणैरुक्तं सात्त्विकपुराणविरुद्धं न ग्राह्यम्। तदेतत्सर्वम् 'संकीर्णाः सात्त्विकाश्चैव राजसाश्चैव तामसाः' इति कल्पानां सात्त्विकत्वादिविभागानन्तरं प्रवृत्तस्य 'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते। अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते। राजसेषु तु महात्म्यमधिकं ब्रह्मणो विदुः॥ संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते। सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः॥ तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्' इति मात्स्यवचनसंदर्भस्याशयस्थितमुन्नीयते— अत्र हि, 'यस्मिन्कल्पे' इत्यादिश्लोकेन तत्तत्कल्पे ब्रह्मप्रोक्तानां पुराणानां तत्तत्कल्पविषयत्वोक्त्या कल्पान्तरविषयपुराणानां कल्पान्तरप्रोक्तत्वशङ्कां निरस्य 'अग्नेः शिवस्य माहात्म्यम्' इत्या-

दिना शैवादिपुराणानां तामसादिकल्पविषयत्वप्रतिपादना-त्तेषां तामसादिकल्पेष्वेव ब्रह्मप्रणीतत्वं सिध्यतीति; अतः पुराणानां वक्तृगुणानुगुणबलाबलविभागोऽत्र लभ्यते । ननु पुराणानां तामसादिकल्पप्रणीतत्वसिद्ध्या कथं वक्तृगुणभेद-सिद्धिः? कल्पानां तामसत्वादि ब्रह्मणस्तत्तद्गुणोद्रेकात्—— इत्युदाहृतश्लोकेष्वप्रतिपादनादिति चेत्, न; 'संकीर्णाः सा-त्त्विकाश्चैव' इत्यादिना प्राक् कल्पानां सात्त्विकत्वादिविभागस्य तत्तत्कल्पेषु ब्रह्मणस्तत्तद्गुणप्राचुर्याभिप्रायकत्वात्; तथावि-भागस्य तत्तत्कल्पेषु तेन प्रणीतानां परस्परविरुद्धतत्तद्देवतो-त्कर्षख्यापनपराणां पुराणानां कार्त्स्न्येन प्रामाण्यायोगे सति, तेषु हेयोपादेयविशेषपरिज्ञानाय वक्तृगुणानुगुणबलाबलसूच-नेन सप्रयोजनत्वात्; शिवादिमहिमवर्णनपराणां पुराणानां तामसादिकल्पब्रह्मप्रणीतत्वप्रतिपादनपर्यवसितेन समनन्तर-संदर्भेणोदाहृतप्रयोजनपरतायाः संगतत्वाच्च; विधान्तरेण सा-त्त्विकादिविभागस्य निष्प्रयोजनत्वात्; अनन्तरसंदर्भाननु-रोधाच्च । तस्मादुदाहृतवचनपर्यालोचनया शैवपुराणानां त-मोगुणनिरुद्धतत्त्वावबोधब्रह्मप्रणीतत्वेनानादरणीयत्वावगमान्न तद्बलादपि शिवस्य जगत्कारणत्वसिद्धिप्रत्याशा । सात्त्वि-केषु तु वैष्णवेषु पुराणेषु 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव

च स्थितम् । स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः' इत्यादिना नारायणस्यैव जगत्कारणत्वं निर्धारितम् । सकलधर्मशास्त्रकारमूर्धन्येन मनुना च धर्मशास्त्रोपक्रमे— 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥ ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥ सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्माज्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः— इत्युक्त्वा, 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' इति श्लोके पितामहस्यापि स्रष्टरि जगत्कारणे पुरुषे नारायणनामनिर्वचनेन नारायणस्यैव जगज्जन्मादिकारणत्वमाविष्कृतम् । जगज्जन्मादिकारणत्वं परस्य ब्रह्मणो लक्षणमिति सूत्रितवता ब्रह्ममीमांसासूत्रप्रणेत्रा भगवता बादरायणेनापि महाभारते स्वाभिमतपरब्रह्मद्योतनार्थम् 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये' 'असृजत्सलिलं पूर्वं स तु नारायणः प्रभुः । ततस्तु भगवांस्तोये ब्रह्माणमसृजत्स्वयम्' इत्याद्यनेकप्रदेशेषु नारायणस्यैव

जगत्कारणत्वं व्यवस्थापितम्; तस्माल्लक्षणानुरोधान्नारायण एव परं ब्रह्म; अत एव तैत्तिरीयकश्रुतिः— 'नारायणपरं ब्रह्म' इति । यत्त्वत्र पाशुपतानां नारायणात्परं ब्रह्मेति व्याख्यानम्, तदयुक्तम्; महोपनिषदि समानप्रकरणे 'नारायणः परं ब्रह्म' इति पदविच्छेदेनाध्ययनदर्शनादिहापि तदैकार्थ्यात्, भिन्नपदस्य नारायणेत्यस्य 'सुपां सुलुक्' इत्यादिसूत्रेण छान्दसस्य प्रथमाविभक्तेर्लुगादेशस्य कल्पनीयत्वात्, समासपदत्वेऽपि निषादस्थपत्यधिकरणन्यायेन समानाधिकरणसमासस्यैव संग्राह्यत्वात्, निषादस्थपत्यधिकरणे व्यधिकरणतत्पुरुषात्समानाधिकरणतत्पुरुषस्य कर्मधारयस्य विभक्त्यर्थलक्षणागौरवाभावेनाभ्यर्हितत्वस्थितेः, 'अहमेव परं ब्रह्म परतत्त्वं पितामह । अहमेव परं ज्योतिः परमात्मा त्वहं विभुः' इति लिङ्गपुराणे ब्रह्माणं प्रति भगवद्वचने नारायणस्य परब्रह्मताप्रतिपादनपरतयैवास्य मन्त्रस्योपबृंहणेन व्यधिकरणतत्पुरुषकल्पनायोगाच्च; तस्मान्नारायण एव परं ब्रह्मेति, स एव सर्वदेवोत्कृष्टः । अत एव बह्वृचब्राह्मणम्— 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेणान्याः सर्वा देवताः' इति । एवं च ब्रह्मशिवावपि भगवत्सृज्यतया तन्नियम्यतया च पुरंदरादिवत्परतन्त्रावेव; 'अथ पुनरेव

नारायणः सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत्ता इमा आपस्तासु तेजो हिरण्मयमण्डमभवत्तत्र ब्रह्मा चतुर्मुखोऽजायत । अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति महोपनिषदि, 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इति नारायणोपनिषदि च तयोस्तत्सृज्यत्वश्रवणात्; महाभारते— 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः' इत्यारभ्य 'एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्ति सनातनीम्' इति तयोर्दक्षमन्वादिवद्भगवत्कृतमर्यादानुवर्तित्वोक्तेश्च । तयोरपि ब्रह्मा ज्यायान्, उदाहृतश्रुत्योर्ब्रह्मणः प्रथममुत्पत्तिश्रवणात्, 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ मम । मया दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः । एष माता पिता चैव युष्माकं प्रपितामहः ॥ अस्यैव चानुजो रुद्रो ललाटाद्यः समुत्थितः । मयानुशिष्टो भविता सर्वलोकवरप्रदः' इति महाभारते शिवस्य ब्रह्मानुजत्वोक्तेश्च; विष्णुपुराणादिषु ब्रह्मण एव तस्योत्पत्तिप्रतिपादनाच्च । तस्मान्नारायणस्य सर्वकारणत्वेन सर्वोत्तरत्वाद्ब्रह्मशिवादीनां

तत्परतन्त्रत्वाच्च स्थिरपुरुषार्थप्रेप्सुभिः स एवोपासनीयः प्रपत्तव्यश्च ; 'कारणं तु ध्येयः' इत्याथर्वणिकश्रुतेः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्वेताश्वतरमन्त्रवर्णाच्चेति ॥

मुधारब्धं विहायान्यन्मूर्खतान्त्रिकजल्पितम् ।
संग्रहेण निराकार्यं सारभूतमिहालिखम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य-
विश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोः
श्रीमदप्पयदीक्षितस्य कृतौ
शिवकर्णामृते पूर्वपक्षसंक्षेपः ॥



# सिद्धान्तसंक्षेपः ॥

अत्र ब्रूमः—

जगत्कारणता सत्यं लक्षणं ब्रह्मणि स्थितम् ।
अत एव वयं शंभुं ब्रह्मेति प्रमिमीमहे ॥

तथा ह्यथर्वशिरसि—'अहमेकः प्रथममासम्' इति शिववचनम् 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिप्रतिपन्नं सर्गाद्यसमये सर्वकारणभावेनावस्थानं शिवस्य प्रतिपादयति। न चेदमन्याभिप्रायकम्; 'को भवान्' इति स्वकीयासाधारणरूपप्रश्नोत्तरस्यास्य शिववचनस्य तदन्यविषयत्वे प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः। न च 'सोऽन्तरात्' इत्यनन्तरसंदर्भसंगत्यनुरोधेन प्रश्नवाक्यस्याप्यन्यविषयत्वं कल्प्यत इति शङ्क्यम्; उपक्रमस्यानुपसंजातविरोधिनः प्रबलत्वेन तदनुरोधेनैवोत्तरसंदर्भस्य नेयत्वात्। 'को भवान्' इति भवच्छब्देन तदन्तर्यामिणं देवं पृच्छतां देवानां सर्वशब्दानामन्तर्यामिणि पर्यवसाने परपरिकल्पिते व्युत्पन्नानामुत्तरवाक्यस्थाहंशब्दस्यापि तत्पर्यवसायित्वं स्पष्टमेवेति तत्र तान्प्रत्युपपादनीयाभावात्; उक्तार्थोपपादक-

त्वेन परोक्तरीत्या 'सोऽन्तरात्' इत्यादेः स्वस्थानेऽन्वयासंभवेन तदापि तदसांगत्यतादवस्थ्याच्च । न च 'सोऽन्तरात्' इत्यादेः परोक्तरीत्यार्थकल्पनमपि युक्तम्; 'तेन रक्तं रागात्' इत्यादौ असमभिव्याहृतार्थपरस्य तत्पदस्य अशब्दोपस्थापिताव्यवस्थितानेकार्थपरत्वेऽपि इह व्यवस्थितैकार्थपरस्य प्रकृततच्छब्दस्याशब्दसंनिधापितार्थपरत्वायोगात् । पूर्ववाक्येऽहंशब्दस्यान्तर्यामिणि पर्यवसानात् तस्य तच्छब्दसंनिधापितार्थपरत्वमित्यपि न युज्यते; देवैस्तत्पर्यवसानस्य प्रागनवगतत्वेन तान्प्रति तत्पदस्य तद्बोधकत्वानुपपत्तेः; शिव एव सर्वान्तर्यामीति शिवतत्त्वविवेकेऽस्माभिर्निपुणतरमुपपादितत्वेन तदन्यस्यान्तर्यामिणोऽभावाच्च । 'विष्णुरात्मा भगवतः' इत्यत्रात्मशब्दस्य, 'तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम्' इति मोक्षधर्मे कृष्णवचनस्थितात्मशब्दस्येव मुख्ये उपचरिते वा अभेदे तात्पर्यात्; तस्मात् 'सोऽन्तरात्' इत्यादेः स्वस्थानेऽन्वयासंभवात् 'सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसा' इति कृत्स्नशिववचनसमाप्तावन्वयः; तदनन्तरम् 'ततो देवा रुद्रं नापश्यन्' इत्यादिश्रुतिवाक्यदर्शनेन शिववचनसमाप्त्यर्थस्य इतिकरणस्य शिवान्तर्धानप्रतिपादकस्य श्रुतिव-

चनस्य चाकाङ्क्षितत्वात्, 'सोऽन्तरात्' इत्यादेश्च देवदृश्य-स्थूलरूपं विहाय ततः परं सर्वान्तरं सर्वरहस्यं परिपूर्णं रूपं प्राविशदिति तदन्तर्धानप्रतिपादनसमर्थत्वात् । न चैवं व्यवहितान्वये कश्चिद्दोषः; आकाङ्क्षायाः संनिधानाद्बलीय-स्त्वात्; 'यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः । अर्थ-तो ह्यसमर्थानामानन्तर्यमकारणम्' इति मीमांसावार्त्तिको-क्तेः, 'अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धः' इति विश्व-जिदधिकरणसूत्राच्च । नन्वेकस्मिन्वाक्ये पदानां व्यवहिता-न्वयेऽपि किंचिद्वक्तृकवचनसंदर्भमध्यगतस्य तद्वचनत्वमप-हाय ततो बहिरन्वयो न युक्तः, नापि दृष्टचर इति चेत्, न; लोके अन्यवचनमध्येऽन्यवचननिवेशनस्यालंकारिकोक्त-गर्भितत्वदोषेणायुक्तत्वेऽपि वेदे तस्यायुक्तत्वाभावात्, 'इदं पूर्वमिदं पश्चात्पदं वाक्ये भवेदिति । नियमो नैव वेदेऽस्ति पदसांगत्यमर्थतः' इत्युपदेशसाहस्रिकवाक्योक्तरीत्या लौकि-कमर्यादातिवर्तित्वाद्वैदिकवाक्यच्छायायाः । छन्दोगश्रुतौ 'अ-सौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वर-न्नेति एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मींस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्ति' इति श्रुतिवचननिबद्धवक्तृवचनसंदर्भमध्यगतस्य

'इति ह कौषीतकिः' इत्यादेः ततो बहिःश्रुतिवाक्यत्वेनान्वयस्य दृष्टत्वाच्च । अथवा 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्युक्तमुपपादयितुं शिवस्य सर्वजीवभावेन सर्वान्तर्यामिभावेन वा सर्ववस्तुप्रवेशप्रतिपादकतया 'सोऽन्तरात्' इत्यादि स्वस्थान एवान्वितमस्तु । न च तथा सति 'अहं प्राविशम्' इति प्रयोगापत्तिर्दोषः, परमतेऽपि तुल्यत्वात्; यत्र यस्यानुपचरिताहंपदप्रयोगः, तत्र तस्य तत्पदेन परामर्शेस्यादृष्टचरत्वेन स्वात्मन इव स्वान्तर्यामिणोऽपि तत्पदेन परामर्शायोगात् । यदि च स्वान्तर्यामित्वविवक्षायामहंपदप्रयोगेऽपि निष्कृष्टस्वरूपेणान्तर्यामिणस्तत्पदेन परामर्शो युक्तः, तदा स्वात्मविवक्षायामहंपदप्रयोगेऽपि आत्मत्वादिसामान्यरूपान्तरेण स्वात्मनोऽपि तत्पदेन परामर्शो युक्त इति तुल्यम् । अभिमतं च परेषामपि, गीतासु 'मन्मना भव मद्भक्तः' इत्यादावस्मच्छब्दपरामृष्ट एव वासुदेवस्यात्मनि 'तमेव शरणं गच्छ' इत्यादितदीयवचनान्तरगततच्छब्दानामपि पर्यवसानम्; तस्मात्सर्वथापि 'सोऽन्तरात्' इत्यादेरस्मदभिमतार्थ एव सामञ्जस्यात् 'अहमेकः प्रथममासम्' इत्याद्यथर्वशिरोवचनं शिवस्य सर्वकारणत्वं प्रतिपादयतीति युक्तमुक्तम् । एवं च कृत्स्नस्याप्यथर्वशिरसः शिव-

परत्वात् तत्राम्नातम्— 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः' इत्याद्यपि शिवस्य जगत्कारणत्वप्रतिपादकमनुसंधेयम् ॥

तथा 'यदा तमः' इति श्वेताश्वतरमन्त्रोऽपि शिवस्य तमोविशेषाङ्कितसर्गाद्यसमयवर्तित्वेन सर्वकारणत्वं ख्यापयति । यत्तु 'यदा तमः' इत्यनुवाद इति, पुरोवादानुसारेण तत्र शिवशब्दस्य नारायणे वृत्तिर्वक्तव्येत्युक्तम्; तत्रानुवाद इति सत्यमेव, न तु सौबालवाक्यमेव तस्य पुरोवादः, अन्येषामप्यनूद्यमानार्थप्रापकाणाम् 'तमो वा इदमेकमास नासदासीन्नो सदासीत्तदानीं तम आसीत्तमसा गूढमग्रे' इति, 'प्रजापतिर्वा इदमग्र आसीत्', 'नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्पत्' इत्यादीनां श्रवणात् । नापि 'यदा तमः' इति भागवत् 'तन्न दिवा' इत्यादिभागोऽपि कार्त्स्न्येनानुवादः, तद्वृत्तयोगेन तत्काले कस्यचिद्विधेयताप्रतीतेः । विधेयश्चात्र न दिवानिशाविभागाभावः, सदसदात्मकप्रपञ्चाभावो वा; उदाहृतपुरोवादवचनजातादेव तयोः प्राप्तेः । न हि किंचिदनूद्य किंचिद्विधातुं प्रवृत्तं वाक्यमनुवादायावश्यमपेक्षितात्पुरोवा-

दादेव प्राप्तेऽर्थे पर्यवस्यत् साफल्यमश्नुवीत; अतस्तत्रापि 'तन्न दिवा' इत्यादिरनुवादः; एवं च यदि शिवशब्दः स्वौत्सर्गिकशिवपरत्वं हित्वा पुरोवादविशेषप्राप्ते नारायण एव पर्यवस्येत्, तदा 'यदा तमस्तत्' इति किंचिद्विधातुमुद्यम्य अर्धपथपर्यन्तमागतं वाक्यं किं विधेयमासाद्य विश्राम्यतु? न हि शिवशब्दस्य नारायणवृत्तित्वे पुरोवादादप्राप्तं कंचिदर्थं पश्यामः। ततश्च परमते वाक्यमेवेदं व्यर्थं प्रसज्येत। तस्मात्सर्गाद्यसमये तमःप्रापकेषु वाक्येषु क्वचिदधिष्ठाता नारायणशब्देनोच्यते, क्वचित्प्रजापतिशब्देन, क्वचित्साधारणेन परमात्मादिशब्देनेति विरुद्धविशेषद्वयश्रवणादनिर्णीतविशेषपर्यवसाने सति, व्युत्थानप्रतिभासे, तेषामेकविषयत्वं दर्शयितुमयं मन्त्रः तेभ्यः प्राप्तं सर्गाद्यकालिकं तमोऽनूद्य शिवशब्देन तदधिष्ठातुः परमेश्वरत्वं तेभ्योऽप्राप्तं विदधाति इति तत्सार्थक्यस्य वक्तव्यतया, तदर्थं पुरोवादस्थनारायणशब्दस्यैव शिवे वृत्तिर्वक्तव्येति युक्तम्; वरं हि वाक्यवैयर्थ्यात्पदमात्रस्य लक्षणेति। अभ्युपगतं च पूर्वतन्त्रे 'एकादश वै पशोरवदानानि तानि द्विरवद्यति' इति पशौ चोदकप्राप्तावदानद्वित्वपुनर्विधायकवाक्यवैयर्थ्यपरिहाराय 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति

वाक्ये वपापदस्य हृदयादिसाधारण्येन पाशुकहविर्मात्रे लक्ष-णा, तथा सति हृदयादिष्वपि अवदानपञ्चकसिद्ध्यर्थमुपस्त-रणाभिघारणयोः सतोर्हृदयादिषु त्र्यवदानप्रसक्तौ हविर्द्विरे-वावदेयम् उपस्तरणादिवृद्ध्या तु भवति पञ्चसंख्यापूरण-मिति नियमेन भवति तत्सार्थक्यमिति । एवमुक्तेन प्रका-रेण 'यदा तमः' इति पूर्वार्धम् 'तमो वा इदमेकमेवा-ग्र आस' इत्यादीनां केषांचित्कारणवाक्यानां शिवे पर्यव-सानं प्रतिपादयति । तथा उत्तरार्धे 'तदक्षरम्' इति भागः 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरू-पाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवा-पियन्ति' इत्यादिमुण्डकादिश्रुतीनां शिवे पर्यवसानं प्रतिपा-दयति । 'तत्सवितुर्वरेण्यम्' इति भागः सवितृमण्डलमध्य-वर्तिनि परमपुरुषे जगत्कारणत्वनियतं सर्वान्तर्यामित्वलिङ्गम् 'धियो यो नः प्रचोदयात्' इत्युपवर्णयन्त्याः सावित्र्या ऋचः शिवे पर्यवसानं प्रतिपादयति । 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इति भागः 'तदैक्षत बहु स्यां प्रजायेय' इति, 'स ईक्षत लोकान्नु सृजै' इति, 'सोऽकामयत बहु स्यां प्रजायेय' इति, 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति च स्रष्टुरादि-सर्गपूर्वकालिकं स्रष्टव्यवस्तुजातालोचनम् ईक्षणादिशब्देन

प्रतिपादयतां छान्दोग्यादिवाक्यानां च शिवे पर्यवसानं प्रतिपादयति— इत्येवमयं मन्त्रः कृत्स्नकारणवाक्यानां शिवविषयत्वं निर्धारयन्नतितरामाविष्करोति शिवस्य सर्वकारणत्वम् ॥

यत्तु 'वेदाहमेतं पुरुषं महान्तम्' इत्यादिपुरुषसूक्ताम्नातानेकमन्त्रप्रत्यभिज्ञानेन श्वेताश्वतरोपनिषत् नारायणपरा इत्युक्तम्, तन्न; 'या ते रुद्र शिवा तनूः...यामिषुं गिरिशन्त हस्ते' 'मानस्तोके तनये' इति श्रीरुद्राम्नातानेकमन्त्रप्रत्यभिज्ञानस्यापीह सत्त्वेन तत्र विशेषपक्षपातस्य निर्मूलत्वात् । न च 'नान्यः पन्थाः' इति पुरुषसूक्तमन्त्रप्रत्यभिज्ञानमनन्यथासिद्धमित्युक्तमिति वाच्यम्; कैवल्यश्रुतावपि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति प्रस्तुत्य, 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' इति श्रवणेन मुक्त्युपायत्वावधारणस्य पुरुषसूक्तप्रतिपाद्ये नारायणे व्यवस्थितत्वासिद्धेः ॥

वस्तुतः पुरुषसूक्तमपि न नारायणपरम्; 'उतामृतत्वस्येशानः' इत्यत्र 'ईशानः' इत्यभिधानश्रुत्या शिवपरत्वात् । ननु ईशानपदमैश्वर्यगुणयोगेन साधारणम्, सत्यं योगेन साधारणम्; योगेन साधारण्येऽपि रूढ्या तदी-

श्वरासाधारणम्; 'ईश्वरः शर्व ईशानः' 'ईशानः शशिशेखरः' 'पशुपतिः शूली शिवः शंकरः' इत्याद्यभिधानकोशस्मृतिपरंपरया असाधारण्येन तत्र तस्य योगरूढेरपि सिद्धेः, केवलयोगाच्च शक्तिद्वयानुग्रहलाभेन योगरूढेः प्रबलत्वात् । ब्रह्ममीमांसायाम् 'शब्दादेव प्रमितः' इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' इति कठवल्लीमन्त्रस्याङ्गुष्ठमात्र इति परिमितपरिमाणत्वलिङ्गाज्जीवपरत्वप्राप्तौ 'ईशानः' इत्यभिधानश्रुतिरूपाच्छब्दात्परमात्मपरत्वनिर्णयेन तदसाधारण्यस्य स्फुटीकरणाच्च । तस्य केवलयौगिकत्वे हि परमात्मासाधारणशब्दाभावात् भूतभव्यस्येशितृत्वलिङ्गादेव निर्णेतव्यमिति 'शब्दादेव' इति सूत्रमसंगतं स्यात्; परेषामपि अङ्गुष्ठप्रमितः परमात्मा, 'ईशानो भूतभव्यस्य' इति परमात्मवाचीशानशब्दात्— इतीशानशब्दस्यैव शब्दशब्देन विवक्षितत्वान्न ईश्वरसंबन्धिलिङ्गान्निर्णयोऽभिमतः, किं त्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्राय इत्यादिस्वकीयभाष्यकारादिवचनविरोधः स्यात् । एतेन 'उतामृतत्वस्येशानः' इति पुरुषसूक्ते अमृतत्वैश्वर्यरूपकेवलयौगिकार्थविवक्षया प्रयुक्तमीशानपदं न कस्यचिद्वाचकतयेत्याशङ्का निरस्ता; 'ई-

शानो भूतभव्यस्य' इत्यैश्वर्यप्रतियोग्युपादानेऽपि ईशान-शब्दस्य रूढ्युन्मेषेणाभिधानश्रुतित्वस्याङ्गीकारात्, यौगिकार्थसंबन्धिन: कस्यचित्पदान्तरेणानुपादान एव समुदायशक्त्युन्मेष इति व्युत्पत्तिसिद्धनियमाभावाच्च । ननु 'ईशान: प्राणद: प्राण:' इति तन्नामसहस्रस्य मध्ये परिगणनमीशानशब्दस्य विष्णुवाचकत्वमप्यवगमयति, तदेव वेदोपबृंहणार्थे महाभारते पठितत्वादन्तरङ्गम् अभिधानकोशस्मृतिभ्यो वेदार्थनिर्णय इति ततोऽस्य विष्णुपरत्वमेव वक्तुं युक्तम्; अत एवाङ्गुष्ठमात्रवाक्यस्य स्वाभिमतपरमात्मपरत्वं परैरपीशानश्रुत्यैवाभिहितमिति चेत्, न; 'स्तुवन्नामसहस्रेण' इत्युपक्रमानुसारेण सर्वात्मतया स्तोतुं प्रवृत्ते 'विश्वं विष्णु:' इत्यादौ सार्वात्म्याभिप्रायेण देवतान्तरनाम्नामपि बहूनां परिगणनदर्शनेन ततस्तेषां शक्तिसिद्ध्ययोगात्; अन्यथा भारतलैङ्गादित्यपुराणादिपठितशिवनामसहस्रान्तर्गतस्य विष्णुनाम्नोऽभावात्, हरिवंशे कैलासयात्रायाम् 'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा' इति कृष्णं प्रति शिववचनेन विष्णुनाम्नामन्येषां च सारभूतानां नाम्नां शिवनामत्वसिद्धेश्च, अभिधानश्रुत्या क्वचिदपि विष्णुपरत्वनिर्णयो न स्यात्; तत: स्तु-

त्यर्थत्वगन्धरहितलोकवेदसाधारणनामपरिगणनैदंपर्यप्रवृत्ताभिधानकोशस्मृतिरेव प्रबलत्वेन नामत्वे प्रमाणमितीशानशब्दस्य शिववाचित्वव्यवस्थितेः ; ततः पुरुषसूक्तस्य शिवपरत्वनिर्णयो युक्तः ॥

ननु पुरुषश्रुत्याद्यनेकप्रमाणसहकृतस्य तस्य नारायणपरत्वमेव युक्तमिति चेत्, न तावत्पुरुषशब्दो नारायणवाचकः ; 'पुरुषावात्ममानवौ' इत्यभिधानकोशस्मृतेः लौकिकवैदिकप्रयोगप्राचुर्याच्च आत्मसामान्ये तस्य शक्तेरावश्यिकत्वेन, तत एव 'पुरुषो ह वै नारायणः' इत्यादिनारायणविषयप्रयोगोपपत्त्या, बर्हिराज्यादिशब्दानां काचित्कप्रसिद्ध्यापि तृणघृतादिजातिमात्रे शक्तिसिद्धेः, तत एव संस्कृततृणघृतादौ आर्यप्रयोगस्योपपन्नत्वात्संस्कृते विशिष्य शक्त्यन्तरं न कल्पनीयमिति बर्हिराज्याधिकरणस्थितेन न्यायेन तस्य नारायणे विशिष्य शक्त्यन्तरस्याकल्पनीयत्वात् । ननु पुरुषशब्दस्य नारायणनामत्वेन निर्वचनं न्यायानुसारिणीमपि तत्र विशिष्य शक्तिं कल्पयतीति चेत्, न; सामान्यशक्तस्यापि पुरुषशब्दस्य क्वचित्प्रकरणवशान्नारायणे पर्यवसानमस्तीत्येतावज्ज्ञापनेनैव चरितार्थस्यार्थवादबहुलपौराणिकनिर्वचनस्याभिधानकोशवदन्यथासिद्धप्रयोगवि-

षये शक्त्यकल्पकत्वात्; चित्राधिकरणे माहेन्द्रस्तोत्रनाम-त्वेन सिद्धस्य पृष्ठशब्दस्य क्वचित् 'पृष्ठैरुपतिष्ठते' इत्यादौ स्तोत्रसाधने रथंतरादौ लक्षणया प्रवृत्तिरस्तीत्येतावज्ज्ञापनेन चरितार्थस्य 'आपो वा ऋत्वियमार्च्छन् तासां वायुः पृष्ठे व्यवर्तत' इत्यादे रथंतरादौ पृष्ठशब्दप्रवृत्तिनिमित्तप्रतिपाद-नपरस्यार्थवादिकनिर्वचनस्य तत्र विशिष्य शक्त्यन्तराकल्पक-त्वमिति मीमांसकैरप्यभ्युपगमात्। पुरुषशब्दस्य नारायणा-साधारण्यवचनात्तदैकान्त्यमिति वाचोयुक्तिरप्ययुक्ता; सर्वत्र प्रसिद्धप्रयोगाभिधानकोशस्मृतिसिद्धसामान्यशक्तिविरुद्धतद-साधारण्यवचनस्य 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति श्रुतौ तन्त्रवार्त्तिकेऽप्यस्मदुक्तरीत्या पशुत्व-जातेर्गवाश्वासाधारण्यवचनस्य उपकाराधिक्यात्प्रशंसायामिव स्वातन्त्र्यादिपुरुषलक्षणाधिक्यात् नारायणप्रशंसायामेव ता-त्पर्यस्य न्याय्यत्वात्; 'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः। प्रकृतिस्पर्शराहित्यात्स्वातन्त्र्याद्वैभवादपि ॥ स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते। स्त्रीप्रायमितरत्सर्वं जग-द्ब्रह्मपुरःसरम्' इति नारसिंहपुराणवचनेन तथैव विभाव-नाच्च। महापुरुषशब्दोऽपि न तद्वाचकः, उक्तरीत्या सामा-न्यशक्त्यैव प्रयोगोपपत्तेः। न चात्र महापुरुषशब्दश्रवणमपि,

'पुरुषं महान्तम्' इति भिन्नपदयोरेवेह श्रवणात् । न हि पदद्वयस्य क्वचिदेका रूढिरस्ति ॥

लक्ष्मीपतित्वलिङ्गमपि प्रथमोपदिष्टह्रीशब्दस्वरूपहृल्लेखार्थगौरीपतित्वलिङ्गानुगुण्यमेवावलम्बते । वाजसनेयके 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पठ्यते इति चेत्, किं ततः? श्रीशब्दस्यापि समानप्रकरणाम्नातहृल्लेखार्थ एव पर्यवसानात् । न च वैपरीत्यं शङ्क्यम्; ह्रीशब्दस्य कमलायामदृष्टप्रयोगत्वात्, श्रीशब्दस्य 'श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः' इत्यायुष्यसूक्ते गौर्यां दृष्टप्रयोगत्वात्, 'ह्रीश्च ते' इति मन्त्रस्य ग्रहयज्ञे सोमाधिदेवताया गौर्याः पूजायां विनियोगस्य स्मृत्यर्णवादिषूक्तत्वेन ह्रीशब्दस्य गौरीपरत्वावश्यंभावाच्च । तस्मात्प्रथमश्रुतानुगुण्येन 'लक्ष्मीश्च पत्न्यौ' इति 'तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा' इति शिवपुराणोक्तशिवाङ्कस्थिताम्बिकांशविशेषरूपलक्ष्मीपतित्वलिङ्गमीश्वरपरमेव । अत एवानन्तरमपि 'अहोरात्रे पार्श्वे' इति शिवस्यैव प्रसिद्धतरमर्धनारीश्वरात्मकं रूपमुपदिश्यते । नारायणसमाख्यापि पुरुषसूक्तस्य नाचिकेतवत्तद्दृषिकत्वनिबन्धना, न तत्परत्वनिबन्धना; 'नारायणदृष्टेन पुरुषसूक्ते-

नोपहितां चितिमुपतिष्ठमान इह जन्मनि पुरुषो भवति' इति वाधूलसूत्रे ऋषिदेवतयोर्नारायणपुरुषपदाभ्यां भेदेनोपदेशात् ॥

नारायणसमाराधने विनियोगेनापि नाभिधानश्रुतिप्राप्तस्य शिवपरत्वं बाध्यते; 'अग्निर्मूर्धा दिवः ककुत्' इत्यादिमन्त्राणामभिधानश्रुतिबलात् आग्नेयादीनामेव सतां ग्रहयज्ञे तत्तद्ग्रहाराधने तत्तद्देवत्यमन्त्रविनियोगावसरे भौमादिपूजायां विनियोगस्य बहुशस्तत्प्रीणनजपादौ विनियोगस्य च संप्रतिपत्तेः । अन्यथा 'यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्' 'अथ नारायणाभ्यासुपस्थानम्' इत्यादिविनियोगान्तरेणाप्यन्यपरत्वापत्तेः । अस्ति चास्य सूक्तस्याभिधानश्रुत्याद्यनुगुणो विनियोगः; यथा बोधायनसूत्रे श्रीरुद्राङ्गन्यासे शिवसंकल्पादिभिः सह विनियोगः । तथा च लिङ्गपुराणे शिवपूजाविधौ 'ज्येष्ठसाम्नां त्रयेणैव तथा देवव्रतैरपि । रथंतरेण पुण्येन सूक्तेन पुरुषेण च' इति शिवाभिषेके देवव्रतादिभिः सह विनियोग उक्तः । उपबृंहणमपि विष्णुपुराणादि दृष्टविनियुक्तमन्त्रार्थविवरणरूपत्वाच्छ्रुतविनियोगनिर्वाहार्थत्वेनान्यथासिद्धमनन्यथासिद्धश्रुतिप्राप्तं न शिवपरत्वमपवदितुमीष्टे । तथा हि—अस्त्यन्यदेवत्यानां मन्त्राणां

विधिबलाद्देवतान्तरयजने विनियोगः; स च तेषां मन्त्राणां यजनीयदेवताप्रकाशकत्वसंपादनेन निर्वाह्यः; मन्त्राधिकरणे मन्त्रविनियोगस्य वाक्यार्थप्रतिपादकत्वस्थितेः। तदर्थं च मन्त्रस्थस्य देवतान्तरपरस्य पदस्य यजनीयदेवतायां मुख्यवृत्त्यसंभवात् 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यधिकरणन्यायेन लक्षणादिना वृत्तिर्वाच्या; तत्समभिव्याहृतविशेषणपदानां तु 'दर्भैः स्तृणीत हरितैः' इति मन्त्रे दर्भेषु हरितशब्दवत् संभवदर्थानां तद्विशेषणगुणादिप्रकाशनद्वारा तत्र पर्यवसानं वाच्यम्; 'सोमः पवते जनिता मतीनाम्' इति मन्त्रे सोमलतायामग्न्यादिजनयितृत्ववत् तत्रासंभवदर्थकानां त्वभ्युदयार्थं समवेतगुणादिप्रदर्शनद्वारा तत्र पर्यवसानं वाच्यम्; असमवेतस्यापि समवेतविशेषणस्याभिधानं मन्त्रश्रुतविशेषणविशिष्टरूपप्रकाशनमभ्युदयकारीति नियमादृष्टार्थमित्यस्यार्थस्य 'ततश्चावचनं तेषामितरार्थं प्रयुज्यते' इति नावमिकाधिकरणे स्थितेः। एवं च पुरुषसूक्तस्याभिधानश्रुतितदनुगुणलिङ्गादिनियमितशिवैकान्त्यस्यापि श्रुतविनियोगान्तरनिर्वाहाय धनदादिप्रकाशकत्वप्रकारवत् नारायणप्रकाशकत्वप्रकारोऽपि कश्चित् पुरुषबुद्ध्या किल कल्पनीय इति, स एव तत्समाराधनतदङ्गतत्फलादिप्रपञ्चनप्रधानेषु पुरा-

णागमेषु नियम्यत इत्यन्यथासिद्धान्युपबृंहणानि । दृश्यन्ते हि अन्यत्रापि असमवेतार्थविशेषणस्य अन्यसमवेतविशेषणकस्यापि मन्त्रस्य तथैव पुराणेषु उपबृंहणानि; यथा वायुसंहितायाम्— 'सोमं ससर्ज यज्ञार्थं सोमाद्द्यौः समजायत । धरा वह्निश्च सूर्यश्च वज्रपाणिः शचीपतिः ॥ विष्णुर्नारायणः श्रीमान्सर्वं सोममयं जगत्' इति । सन्ति च पुरुषसूक्तस्य शिवपरत्वप्रतिपादकान्युपबृंहणानि, यथा तावल्लिङ्गपुराणे—'द्यौर्मूर्धा हि विभोस्तस्य खं नाभिः परमेष्ठिनः । सोमसूर्याग्नयो नेत्रं दिशः श्रोत्रे महात्मनः ॥ वक्त्राद्वै ब्राह्मणा जाता ब्रह्मा च भगवान्विभुः । इन्द्राविष्णू भुजाभ्यां तु क्षत्रियाश्च महात्मनः । वैश्याश्चोरुप्रदेशात्तु शूद्राः पादात्पिनाकिनः' इत्यादि; एवमन्यत्राप्युदाहार्यम् । तस्मादुक्तरीत्या अन्यथासिद्धविरुद्धविनियोगोपबृंहणाद्यबाध्यैरभिधानश्रुतितदनुगुणलिङ्गविनियोगोपबृंहणैः पुरुषसूक्तस्य शिवपरत्वसिद्धेः न तन्मन्त्रप्रत्यभिज्ञानेन श्वेताश्वतरमन्त्रसंदर्भस्य नारायणपरत्वशङ्कावकाशः । न च हरशिवरुद्रमहेश्वराद्यनेकाभिधानश्रुतिप्रापितमस्य शिवपरत्वं विरुद्धप्रत्यभिज्ञा सत्यपि बाधितुमीष्टे; स्थलद्वयपरामर्शसापेक्षतया विलम्बितत्वेन पाठक्रमान्मुख्यक्रमवत् श्रुतिभ्यः प्रत्यभिज्ञाया दुर्ब-

लत्वात् । हरशिवरुद्रमहेश्वरादिशब्दानां तु असाधारण्येन शिवाभिधानश्रुतित्वमीशानशब्दवदेवावगन्तव्यम् ॥

एवं चास्यामुपनिषदि कार्त्स्न्येन शिवपरायाम्, 'भूयः स सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः । छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' इत्यादीन्यत्र मन्त्रान्तराण्यपि शिवस्य करणत्वप्रतिपादकान्यनुसंधेयानि । इत्थं मन्त्रोपनिषदुपक्रममारभ्य सर्वैर्मन्त्रैस्तत्र तत्र हरशिवरुद्रमहेश्वरादिपदपरामृष्टस्य शिवस्य सर्वकारणत्वं सर्वाधिष्ठातृत्वं च प्रतिपादयन्त्येवान्तं लक्ष्यते । उपक्रमे चास्यामुपनिषदि 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठा । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' इति मन्त्रेण केषांचिद्ब्रह्मवादिनामृषीणाम् 'यतो वा' इत्यादिवैदिकवाक्यसमन्वयात् ब्रह्म जगज्जन्मादिकारणं सर्वाधिष्ठातृ च इत्येतावन्निश्चयवतां तद्ब्रह्म किंदेवतारूपमिति विशिष्याबुध्यमानानां सकलजगज्जननजीवनोपसंहारकारणसर्वाधिष्ठातृभूतं च तद्ब्रह्म किंदेवतारूपम्—इत्यमुं संशयं सामान्यतो विशेषतश्च 'किं कारणं ब्रह्म'

इत्यादिभागैः प्रदर्श्य, जगतः कालस्वभावनियतिमहाभूतप्रधानपुरुषतन्मेलनान्यतमकारणकत्वस्य यादृच्छिकत्वरूपस्याकारणकत्वस्य वोपपत्तेः, ब्रह्म कारणमित्येतदेवासिद्धमिति संशयस्य निरालम्बनत्वशङ्का मा भूदिति संशयधर्म्युपपादकतया तेषामेव कालकारणत्वादिनिरासप्रकारम् 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' इति मन्त्रेण प्रदर्श्य, स्वतोनिर्णयाशक्तानां तेषां ब्रह्मविद्याप्रदानैकक्त्यायाः पराशक्तेरम्बिकायाः प्रसादादयमर्थो निर्णीतो भविष्यतीति तां ध्यायतां तत्साक्षात्कारम् 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति प्रतिपाद्य, 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्याधितिष्ठत्येकः' इत्यादिना तमपश्यन्निति क्रियानुषङ्गवता तत्प्रसादादुपजातं तेषां कालाद्यवान्तरकारणबृन्दस्याधिष्ठातुः सर्वकारणस्य परब्रह्मणो विशिष्य निर्णयं चोपदिश्य, अनन्तरमुपनिषदा स्वयं 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिना प्रपञ्चेन शिवस्य सर्वकारणत्वसर्वाधिष्ठातृत्वप्रतिपादनादुपाख्यानविशेषनिबन्धनेन 'यतो वा' इत्यादिश्रुतिसिद्धं कारणं ब्रह्म शिव एवेति विशेषोपसंहारो दर्शितः ॥

ननु 'किं कारणं ब्रह्म' इति संशयवाक्ये न कारणं ब्रह्म शिवो वान्यो वेति संशयशरीरमिति कण्ठतः प्रतिपादितम्; निर्णयवाक्येऽपि कारणं ब्रह्म शिव इति न निर्णयो दर्शितः; केवलं संमुग्धया रीत्या संशयनिर्णयवाक्यसंदर्भौ प्रवृत्तौ; कुत इदमुपाख्यानं कारणत्वाधिष्ठातृत्वयोर्दैवताविशेषोपसंहारपरमवसीयते? उच्यते; कारणे ब्रह्मणि निश्चिते तद्विशेषजिज्ञासया प्रवर्तमानस्तावत्संशयो देवताविशेषकोटिक एव युज्यते, औचित्यात्, प्रकारान्तरासंभवाच्च; निर्णयोऽपि शिवविषय एव युज्यते; तस्यैवानन्तरं कृत्स्नयाप्युपनिषदा सर्वकारणत्वसर्वाधिष्ठातृत्वयोः प्रपञ्च्यमानत्वात् । स्वप्रतिपिपादयिषितेऽर्थे श्रोतॄणां प्रतिपत्तिसौकर्याय हि श्रुतिष्वाख्यायिकावतरणम्; 'पारिप्लवार्था इति चेन्न विशेषितत्वात्' इत्युत्तरमीमांसाधिकरणे तथैवाख्यायिकानां प्रयोजनप्रतिपादनात् । कूर्मपुराणे चास्योपाख्यानस्य शिवस्य कारणत्वादिनिर्धारणे तात्पर्यं संक्षेपेणैव दर्शितम् । तत्र हि— 'समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहून्वादानात्मविज्ञानसंश्रयान् ॥ किमस्य जगतो मूलमात्मा वास्माकमेव हि । कोऽपि स्यात्सर्वभूतानां हेतुरीश्वर एव च ॥ इत्येवं मन्यमानानां ध्यानकर्मावलम्बिनाम् । आविरासीन्महादेवी गौरी

गिरिवरात्मजा' इत्युपक्रम्य, उक्तम्— 'निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शंभुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम्' इति । एवमस्यामुपनिषदि उपक्रमे कारणं ब्रह्म शिव एवेत्याख्यायिकाव्याजेन स्वयमेव निर्धारणात्, 'यदा तमः' इति मन्त्रे सर्वकारणवाक्यानां शिवविषयत्वस्य कण्ठतः प्रतिपादनाच्च, व्यर्थः परेषां विषयान्तरोपसंहाराय छागपशुन्यायोपन्याससंभ्रमः। तथा 'यो देवानाम्' इति मन्त्रोऽपि सर्वदेवप्रथमहिरण्यगर्भजनयितृत्वेन शिवस्य सर्वकारणत्वमाविष्करोति । न चायम् 'नारायणाद्ब्रह्मा जायते' इत्येतदनुवादः ; एतदर्थस्य पशुपतेर्हिरण्यगर्भजनयितृत्वस्य ततः प्राप्त्यभावात् । न हि प्राप्त्यसंभवे यदुपबन्धसहस्रेणापि शक्यते कल्पयितुमनुवादत्वम् ; 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्यादीनां यदुपबन्धेऽपि तदर्थप्रतिपादकाभावेन स्वयमेव विधायकत्वात् । नारायणे रुद्रपदस्य लक्षणया 'नारायणाद्ब्रह्मा जायते' इत्यतः प्राप्तिसंभव इति चेत्, न; 'यदाग्नेयः...' इत्यादिवाक्येष्वग्न्यादिशब्दानामपि यत्किंचित्पदार्थलक्षकत्वे तत्प्रापकं यत्किंचित्प्रमाणं संभवतीति तेषामप्यनुवादत्वापत्त्या सकलमीमांसाव्याकुली-

भावप्रसङ्गात् । अन्योन्याश्रयापत्तेश्च— रुद्रपदस्य नारायणे लक्षणासिद्धौ हि तत्प्रापकसंभवेनास्यानुवादत्वम्, सिद्धे चानुवादत्वे पुरोवादानुसारेण लक्षणाकल्पनमिति । वस्तुतस्तु यदि द्वयोर्हिरण्यगर्भकारणत्वं न संभवेत्तदा श्रुतिविशेषश्रुतयोः रुद्रनारायणपदयोरन्यतरस्य लक्षणावश्यंभावात् यदुपबन्धानुग्रहाय रुद्रशब्दस्यैव नारायणे लक्षणा कल्प्यत इति शङ्क्येत, संभवति च द्वयोरपि तत्कारणत्वमण्डपद्मयोरिव कल्पभेदेन ॥

यत्त्वस्य मन्त्रस्य शिवपरत्वमुपेत्याप्यवैदिकानां व्याख्यानम्— महर्षिः महान् द्रष्टा योगबलेन कालत्रयवृत्तान्तसाक्षात्करणसमर्थो रुद्रः स्वजन्मनः प्रागेव नारायणाज्जायमानं हिरण्यगर्भं जायमानावस्थाविशिष्टमेव योगबलादपश्यदिति । तदपि तुच्छम्; श्वेताश्वतरे 'हिरण्यगर्भं जनयामास पूर्वम्' इत्यस्य मन्त्रस्य पाठात्, तदनुरोधेनात्र स्वस्माज्जायमानं हिरण्यगर्भं लोकसृष्ट्यर्थमाज्ञादृष्ट्या अपश्यदित्यर्थस्याभ्युपगन्तव्यत्वात् । 'अव्यक्तादभवत्स्थाणुः शिवः परमकारणम् । सत्कार्यकरणोपेत ऋषिर्विश्वाधिकः प्रभुः ॥ देवानां प्रथमं देवं जायमानं मुखाम्बुजात् । ददर्श चाग्रे ब्रह्माणमाज्ञया तमवैक्षत ॥ दृष्टो रुद्रेण देवेशः ससर्ज सकलं

जगत्' इति लैङ्गे तथैवोपबृंहणाच्च ॥

यच्चु 'यद्वेदादौ' इति मन्त्रस्य नारायणपरत्वमुक्तम्, तन्न तावत्प्रकरणानुरोधेन; 'धातुः प्रसादान्महिमानमीशम्' इतीशपदेन योगरूढ्या अनितरसाधारणेनोपक्रमात्, 'विश्वाधिको रुद्रो महर्षिः' इति मध्ये परामर्शाच्च प्रकरणस्य शिवपरत्वावसायात् । नाप्यस्मिन्मन्त्रे विधेयानुरोधेन; 'यः परः स महेश्वरः' इत्यत्र महेश्वरपदेनोक्तरीत्या शिवासाधारणेन 'यः परः' इत्यनूदितस्य परस्य शिवरूपताविधौ तात्पर्यावसायात् । नाप्यनुवाद्यानुरोधेन; परोक्तरीत्यापि हि प्रणवप्रकृतेरर्थोऽनुवाद्यः; न च प्रणवस्य प्रकृतिरकारः; 'अकारो वै सर्वा वाक्' इति श्रुतेः 'ओंकारेण सर्वा वाक्संतृण्णा' इतिवत्स्तावकत्वात् । किं तु 'मात्रा मात्राः प्रतिमात्राः कृत्वा' इति तापनीयश्रुतौ उत्तरोत्तरमात्राणां पूर्वपूर्वमात्रालयस्थानत्वप्रतिपादनात्, भागवते 'समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः । हृदाकाशादभून्नादः' इति प्रस्तुत्य, 'ततोऽभूत्त्रिवृदोंकारः' इत्युक्त्वाच्च, 'यावसानेऽस्य चतुर्थ्यर्धमात्रा' इति तदर्धमात्राव्यपदिष्टः प्रणवसूक्ष्मावस्थारूपत्वेन प्रसिद्धो नाद एव प्रणवस्य प्रकृतिः । न च तस्यार्थो नारायणः; 'एवं तिसृभिरेवैतन्मात्राभिरखिलं त्रिधा । अभिधाय शिवा-

त्मानं बोधयत्यर्धमात्रया' इत्यादिपुराणवचनैस्तस्य शिवप्रति-पादकत्वनिर्णयात् । न च अनुवादभागस्यार्थोऽप्ययमेवेति नि-यमितुं शक्यते, विधान्तरेणापि शिवपरत्वस्वारस्येनानेकधा-र्थवर्णनसंभवादित्यपि प्रपञ्चितं शिवतत्त्वविवेके । तस्मादय-मपि मन्त्रः प्रकरणाद्विध्यनुवादस्वारस्याच्च शिवपरः; तत-श्चैतदनुवाकमध्यविहिता दहरोपासनापि नान्यविषयमवल-म्बते । यस्त्वनन्तरं नारायणस्य प्रस्तावः स तस्योपासककोटिप्रवेशतात्पर्येणेति समर्थितं तात्पर्यसंग्रहे श्रीसुदर्शनाचार्य-चरणैः पूर्वाचार्यैरिति, नेह पुनरुपन्यस्यते विस्तरापत्तेः ॥

तथा अथर्वशिखापि शिवस्य सर्वकारणत्वं प्रख्यापयति । तत्र हि—भगवन् , किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम् , किं तद्ध्यानम् , को वा ध्याता, कश्च ध्येयः इत्युपक्रान्तप्रश्नचतुष्ट-यक्रमेण 'ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्' इत्यादिना 'ध्याता रुद्रः' इत्यन्तेन प्रश्नत्रयोत्तरानन्तरं ध्ये-यनिर्धारणार्थमिदमाम्नायते—'प्राणं मनसि सह कारणैर्ना-दान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यं स-र्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यादि । तत्र

च 'ध्यायीतेशानम्' इति शिवस्य ध्येयत्वं निर्धार्य, तदितरनिखिलदेवतान्तरवैमुख्येन तस्य ध्येयत्वनिर्धारणमुपपादयितुम् 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्राः' इत्यादिना देवेषु ब्रह्मविष्णुरुद्रेन्द्राणां प्रमुखत्वोक्तिपूर्वकम् 'ते संप्रसूयन्ते' इत्यादिना तेषामपि भूतेन्द्रियादितौल्येन परमेश्वरात्प्रसूतिमत्त्वोपन्यासेन 'न कारणं कारणानां धाता ध्याता' इति तेषां कारणभूतस्य शिवस्य प्रसूतिराहित्योपन्यासेन सर्वदेवेभ्यः शिवस्य विशेषं विभाव्य, सोपपत्तिकं तस्य ध्येयत्वं पुनरुपसंहृतम् 'कारणं तु ध्येयः' इत्यादिना। यद्यपि 'प्रसूयन्ते' इति ब्रह्मादीनां भूतेन्द्रियाणां च प्रसूतिमात्रमुपन्यस्तं न तु शिवात्प्रसूतिः, तथापि प्रतियोगिसव्यपेक्षार्थे शब्दनिर्दिष्टे संनिहितस्य प्रतियोगितयान्वयो युक्तः; 'एका देया द्वादश देयाश्चतुर्विंशतिर्देयाः सहस्रं देयमपरिमितं देयम्' इत्याधानदाक्षिणाकल्पभेदश्रुतावपरिमितशब्दस्य प्रतियोगिसापेक्षबहुत्वसामान्यवाचिनः संनिहितसहस्राधिकबहुत्वे पर्यवसानस्य 'अधिकं वा स्याद्बह्वर्थत्वादितरैः संनिधानात्' इति पूर्वतन्त्रे निर्णीतत्वात्संनिधानादीशानस्यैव कारणत्वेनान्वयः। अत एव 'न कारणं कारणानां ध्याता' इति, 'कारणं तु ध्येयः' इति चानन्तरवाक्ययोस्तस्य कण्ठत

एव कारणत्वनिर्देशः । एतेन 'कारणं तु ध्येयः' इत्यत्र कारणपदं सुबालोपनिषदादिप्रतिपन्नकारणानुवादकमिति परपरिकल्पितकुसृष्टिर्निरस्ता ; पूर्ववाक्ये स्वप्रतिपादितस्य कारणस्यानुवादसंभवे परमुखनिरीक्षणायोगात्, इह कारणपदस्यापरिमिताधिकरणन्यायेन संनिध्युपवर्णितकार्यभावब्रह्मविष्णुरुद्रपदस्वारस्यप्रतिपन्नगुणमूर्तित्रयकारणपरत्वेन तथाभूतकारणत्वस्य सुबालोपनिषदादिभ्यो नारायणस्याप्राप्तेश्च । 'ध्यायीतेशानम्' इति प्राचीनवाक्य एव ध्येयनिर्धारणस्य प्रकृतत्वेन तदुपसंहारपरस्यास्य वाक्यस्य तदन्यविषयत्वायोगाच्च । तस्मादथर्वशिखापि शिवस्य सर्वकारणत्वं ख्यापयतीति युक्तमुक्तम् । एवम् 'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं सांपराये' इत्याद्यायुष्यसूक्तमन्त्रादिकमपि भगवतः परमेश्वरस्य जगज्जन्मादिकारणत्वे प्रमाणमनुसंधेयम् ॥

तथा शिवपुराणादिष्वपि 'यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥ न स प्रसूयतेऽन्यस्मात्कुतश्चन कदाचन । कारणानां च यो धाता ध्याता परमकारणम् ॥ स सर्वैश्वर्यसंपन्नो नाम्ना सर्वेश्वरः स्वयम् । सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः ॥ एष देवो

महादेवो विज्ञेयस्तु महेश्वरः । न तस्य परमं किंचित्पदं समधिगम्यते ॥ अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् । अन्तकाले पुनश्चेदमस्मिन्प्रलयमेष्यति' इत्यादिवचनजातं परमेश्वरस्य जगज्जन्मादिकारणत्वं प्रपञ्चेन प्रतिपादयति ॥

यदत्र परैः शैवपुराणानां तामसत्वेन दौर्बल्ये मात्स्यवचनजातमुदाहृतम्, तत् ब्रह्मविष्णवादीनां परस्परस्मादुत्कर्षं प्रतिपादयन्ति पुराणानि कल्पभेदप्रवृत्ततत्तदुत्कर्षविषयतया प्रमाणत्वेनोपपादयितुं प्रवृत्तम्, न तु पुराणेषु केषांचिद्वैदिकप्रद्वेषप्रकल्पितमप्रामाण्यं प्रतिपादयितुम्; 'अग्नेः शिवस्य माहात्म्यम्' इत्यादौ तत्तद्देवतोत्कर्षस्य तत्तत्कल्पप्रवृत्तत्वोपवर्णनेन तद्विषयतया पुराणानामविरोधसिद्धेः स्पष्टत्वात् ॥

ननु तथा सति कल्पानां तामसत्वादिविभागो व्यर्थः, तत्तद्देवतोत्कर्षाणां कल्पभेदप्रवृत्तत्वोपवर्णनमात्रेण पुराणानामविरोधसिद्धेरिति चेत्, न; ऋतुभेदेषु हिमादिप्राचुर्यवत्कल्पभेदेषु तमःसत्त्वादिप्राचुर्यं भवतीति तत्तद्गुणप्राचुर्यनिबन्धनत्वात्तामसादिविभागस्य, तथाविभागस्य च उपाध्युत्कर्षे सति तदुपाधिकोत्कर्षो युक्त इत्यौचित्यरूपेण वस्तुसामर्थ्येन तामसादिकल्पेषु संहाररुद्राद्युत्कर्षोपपादनेन सार्थकत्वात्, तपश्चर्यादीनामुत्कृष्टापकृष्टकालविशेषप्रदर्शनेन सार्थकत्वाच्च ।

तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य मां च 'ध्यानं गिरिशं यान्ति तत्परमं पदम्' इति सात्त्विककल्पान्प्रस्तुत्य कौर्मवचनेन, 'तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्' इति इहापि वाक्यशेषेण च सात्त्विककल्पानां तपश्चर्यादौ प्रशस्ततरत्वप्रतिपादनात् ॥

ननु तथापि 'यस्मिन्कल्पे' इत्यादि श्लोको व्यर्थः, तं विनैव शैवादिपुराणानां तामसादिकल्पविषयत्वलाभेन अविरोधसिद्धेरिति चेत्, न; 'अग्नेः शिवस्य माहात्म्यम्' इत्यादिना तामसादिकल्पे शिवादीनां माहात्म्यमधिकं वदन्तीत्येतावदेव प्रतिपाद्यते, न ततः पुराणानां कल्पभेदविषयत्वं लभ्यत इति तेषां वर्तमानैककल्पविषयत्वशङ्कया विरोधप्रतिभासतादवस्थ्यपरिहाराय 'यस्मिन्कल्पे' इत्यादिना तेषां कल्पभेदविषयत्वस्यापि वक्तव्यत्वात् ॥

नन्वेवमपि पुराणानां तत्तत्कल्पब्रह्मप्रोक्तत्ववादो व्यर्थः; स्वरूपेणानूद्य तेषां कल्पभेदविषयत्वोक्तिमात्रेणोक्तप्रयोजननिर्वाहादिति चेत्, न; 'यस्मिन्कल्पे तु यत्प्रोक्तम्' इत्यत्र प्रोक्तशब्दो हि तत्कल्पे प्रणीतत्वं नाचष्टे; किं तु 'तेन प्रोक्तम्' इति पाणिनिसूत्रे प्रोक्तशब्द इव प्रवचनमात्रमाचष्टे; मात्स्य एव— 'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा

स्मृतम् । अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीच्छतकोटिप्रविस्तरम्' इत्यादिना, 'तदर्थोऽत्र चतुर्लक्षसंक्षेपेण निवेशितः' इत्यन्तेन प्रपञ्चेन सर्गाद्यकृतयुगे वेदप्रवर्तनसमयेऽविभक्तब्राह्मपाद्मादिप्रभेदोऽयं पुराणस्कन्धः शतकोटिप्रविस्तरो युगपदेव ब्रह्मणा प्रणीतः; स एव पुनस्त्रेतायां ब्रह्मादिभिरष्टादशभिर्ऋषिभिरष्टादशधा विभज्य ग्रन्थकोट्या संक्षिप्तः; स एव पुनर्द्वापरान्ते वेदव्यासेन चतुर्लक्षसंख्यया संक्षिप्त इति प्रतिपादनात् । धर्मसंहितायां च 'ब्राह्ममेव कृते चाद्ये पुराणं श्रुतिसंमतम् । अष्टादशविधं तच्च कृतं कोटिप्रभेदतः' इत्यादिना तथा प्रतिपादनात् । एवं च ब्रह्मणा कल्पविशेषेषु पुराणविशेषाणामतिशयेन प्रचारणं कृतमित्ययमपि वादः तत्तत्कल्पोत्कृष्टदेवतामहिमवर्णनपरस्य पुराणस्य तत्तत्कल्पप्रचारणं युक्तमित्यौचित्येन कल्पविशेषे देवताविशेषोत्कर्षमुपोद्बलयन्नुपयुज्यत एव। अतः सर्वसंदर्भसामञ्जस्यादुदाहृतमात्स्यवचनं सर्वपुराणानामविरोधेन प्रामाण्यसमर्थनपरामिति युक्तमुक्तम् । स्पष्टश्चायमर्थः शिवपुराणे प्रतिपादितः— 'त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः ॥ पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु

कर्मसु ॥ ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः । तथा-प्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ॥ तपसा तोषयित्वा तं पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥ कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवान्रुद्रं ब्रह्माणमसृजत्पुनः ॥ तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति' इति । तस्मादुदाहृतवचनैर्ब्रह्मनारायणयोः संहाररुद्रस्य च कल्पभेदेषु स्रष्टृस्रष्ट्व्यभावादिना परस्परोत्कर्षव्यवस्थाप्राप्तावपि तेषां कारणभूतस्य तुरीयस्य परमशिवस्य सर्वकल्पैकरूपस्य सर्वकारणत्वव्यवस्थायाः शिवपुराणादिप्रपञ्चितायाश्चलनाभावात् अथर्वशिखादिश्रुतिसंस्पर्शेन सांख्यादिस्मृतिभ्यो मन्वादिस्मृतिवत्प्रबलैः शिवपुराणादिवचनैस्तस्य सर्वकारणत्वसिद्धिर्निष्प्रत्यूहा । परमशिवसंहाररुद्रविवेकस्तु सम्यगुपपादितोऽस्माभिः शिवतत्त्वविवेके ॥

यत्तु मानववचनजातमुदाहृतम्, तत् 'ततः स्वयंभूर्भगवान्' इत्यादिना पितामहस्यापि स्रष्टृत्वेन प्रतिपाद्यमानस्य नारायणस्य 'प्रादुरासीत्तमोनुदः' इति तमःप्रेरकान्मायाधिष्ठातुः परमशिवात् ततःशब्दोदिते प्रलयानन्तरकाले प्रथमं प्रादुर्भावोक्त्या परमशिवस्यैव सर्वकारणत्वख्यापनपरम् ।

'तमोनुदः' इति हि क्विप्प्रत्ययेन पञ्चम्यन्तम्, 'प्रादुरासीत्' इत्युक्ते कस्मादित्याकाङ्क्षानुरोधात्; न तु इगुपधलक्षणकप्रत्ययेन प्रथमान्तं प्रादुर्भवितृविशेषणम्; पश्चात्प्रादुर्भवतः पूर्वसिद्धतमोधिष्ठातृत्वायोगात् । मानवधर्मशास्त्रोपसंहारे च 'प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्' इति परं पुरुषं निर्धार्य, 'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः । जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्' इति सद्योजातादिमूर्तिपञ्चकेन, 'मूर्तयस्तस्य विख्याताः पञ्च ब्रह्माह्वयाः पराः । सर्वलोकशरण्यस्य शिवस्य परमात्मनः' इत्यादिपुराणवचनप्रतिपादितेन वा, पृथिव्यादिपञ्चकेन मूर्त्यष्टकान्तर्गतेन वा सर्वप्राणिजातव्याप्तिलिङ्गस्य तत्रोपन्यासेन शिवस्य परभावे मनोस्तात्पर्यावसायाच्च । योगीश्वरेण च धर्मशास्त्रकृता योगयाज्ञवल्क्ये 'पृथिव्यां वायुमारोप्य लकारेण समन्वितम् । ध्यायंश्चतुर्भुजाकारं ब्रह्माणं परमेष्ठिनम् ॥ धारयेत्पञ्चघटिका धारणात्सिद्धिमाप्नुयात् । वारुणे वायुमारोप्य वकारेण समन्वितम् ॥ शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् । धारयेत्पञ्चघटिकाः सर्वपापैः प्रमुच्यते ॥ वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् । त्र्यक्षं च वरदं

रुद्रं तरुणादित्यसंनिभम्' इत्यादिना, 'आकाशे वायुमारोप्य हकारेण समन्वितम् । बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ शुद्धस्फटिकसंकाशं बालेन्दुकृतशेखरम् । पञ्चवक्त्रधरं सौम्यं दशबाहुं त्रिलोचनम् ॥ सर्वायुधोद्यतकरं सर्वभूषणभूषितम् । उमार्धदेहं वरदं सर्वकारणकारणम् ॥ चिन्तयंश्चित्तविन्यस्तं मुहूर्तमपि धारयेत् । स एव मुक्त इत्युक्तस्तान्त्रिकेष्वपि शिक्षितैः' इत्यन्तेन ब्रह्मादिक्रमेण परमशिवपर्यन्तां धारणामुक्त्वा, 'एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे । ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ॥ युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे' इति फलितार्थप्रदर्शनेन परमशिवस्य सर्वकारणत्वमाविष्कृतम् । भगवता बादरायणेन च महाभारते सभापर्वणि भीष्मपर्वणि च— 'यत्र भूतपतिः सृष्ट्वा सर्वलोकान्सनातनः । उपास्यते तिग्मतेजा वृतो भूतैः सहस्रशः' इत्यादिभिर्नाकोपवर्णनवचनैः, 'ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः । विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ॥ सृज्यते ग्रस्यते चैव तमोभूतमिदं यथा । अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः' इत्यादिशान्तिपर्ववचनैः, 'स एष भगवानीशः सर्वतत्त्वादिरव्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥ सोऽसृजद्दक्षिणादङ्गा-

द्ब्रह्माणं लोकसंभवम् । वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥ युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजत्' इत्याद्यानुशासनिकवचनैः, 'अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्वमीड्यः' इत्यादिकृष्णकृतस्तोत्रादिमध्यगतहरिवंशवचनैश्च तस्य सर्वकारणत्वमाख्यापितम्; तस्मात्परमशिव एव परमकारणम् ॥

यत्तु श्रुतिपुराणभारतेषु नारायणं प्रस्तुत्यापि क्वचित्परमकारणत्वोपवर्णनम्, तत्सर्वं तस्मिन्वस्तुकृतं भावनासिद्धं वा परमशिवाभेदमभिप्रेत्य तद्दृष्ट्या प्रवृत्तमिति मन्तव्यम् । कृष्णाद्यवतारा नारायणस्यैव ब्रह्मविष्णुरुद्राः परमेश्वरस्यांशभूतास्ततो न भिन्ना इति पक्षे हि, कृष्णाद्यवतारेषु आदिनारायणगुणचरितादिकीर्तनमिव, नारायणे परमशिवगुणादिकीर्तनं तदभिप्रायेणोपपद्यते; तद्भेदपक्षे च 'ब्रह्मोच्यते परमसौ परमं च तत्त्वं ज्योतिः परं च परमेश्वर पद्मनाभः । त्वद्भावनैकरसिकस्त्वदनन्यभावान्मन्त्री यथा गरुडभावनया गरुत्मान्' इति श्रीसुदर्शनाचार्यैरुपदिष्टरीत्या तत्र तद्वर्णनं संगच्छते । न चात्र वैपरीत्यं शङ्क्यम्; जगत्कारणस्य ब्रह्मणो विरुद्धानेकविशेषश्रवणे या हि श्रुतिस्तन्निर्धारणैदंपर्येण

प्रवृत्ता, तदनुरोधेन विशेषनिर्धारणं कर्तुं युक्तम्; अनन्यपर-प्राबल्यात् । अत एव पौर्णमास्यामाग्नेयाग्नीषोमीययोः क्रमेणानुष्ठानायापेक्षिते स्मृतिक्रमे अनुष्ठेयार्थस्मृत्येकप्रयोजनमन्त्र-पाठक्रम एव नियामकः, न तु तद्विरोधी विधानेन चरितार्थ-योर्ब्राह्मणयोः पाठक्रमः— इति निर्णीतम् 'मन्त्रतस्तु विरोधे स्यात्' इति पाञ्चमिकाधिकरणे । ततश्च सुबालोपनिषदादिसृष्टिप्रकरणेषु स्रष्टृसद्भावस्रष्टव्यपदार्थजाततत्क्रमादिप्रति-पादनेन चरितार्थेषु, तत्तदभिधानश्रुतिबलात् देवतान्तरकारण-त्वप्रतीतावपि श्रुत्यन्तरप्रतिपादितं स्रष्टृसद्भावादिकं सिद्धं कृत्वा स्रष्टुर्ब्रह्मणो देवताविशेषरूपेण निष्कर्षं प्रति प्रवृत्तायां मन्त्रो-पनिषदि हरशिवादिशब्दितस्य परमशिवस्य जगज्जन्मादि-कारणत्वप्रतिपादनस्य प्रबलत्वात्तत्रैव तद्व्यवतिष्ठते । एतेन सृष्टिप्रकरणेषु कारणे नारयणपदप्रयोगो बलवानिति पराभिमानो गलितः; न च तत्र नारायणपदाभ्यासो बलीयानिति पराभिमानो युक्तः; बहुशोऽभ्यस्तस्यापि तस्य तद्विषयप्राणाकाशाक्षरादिशब्दवत् संभवदन्यथासिद्धिकस्य अनन्यपर-श्रुतिविरोधे दुर्बलत्वात् । किं चाथर्वशिखायाम् 'ब्रह्म विष्णु-रुद्रेन्द्रास्ते संप्रसूयन्ते' इत्यादिना ब्रह्मादीनां परमशिवस्य च कार्यकारणभावेन विशेषप्रतिपादनमपि वैपरीत्यशङ्कां निरुण-

द्धि । न हि नारायणमपि कार्यकोटौ निक्षिप्य शिवस्य कारणत्वप्रतिपादनं नारायणविषयतया योजयितुं शक्यम्; न च ब्रह्मरुद्रमध्यपठितस्य विष्णुशब्दस्य तदवतारविशेषपरत्वकल्पना प्रमाणवती; 'यदा तमः' इति मन्त्रश्च साक्षात्कारणवाक्यानां शिवविषयत्वं दर्शयन्, सुबालोपनिषदादिषु नारायणकारणत्वप्रतिपादनस्यापि शिवविषयत्वं स्पष्टीकरोति । कृष्णस्य बहुधा सर्वकारणत्वादिकं प्रतिपादयन्त्या भगवद्गीतायाश्च शिवविषयत्वं कूर्मपुराणे पार्थं प्रति 'ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया । स्वयमेव हृषीकेशः प्रीत्योवाच सनातनः ॥ गच्छ गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि । भजस्व परया भक्त्या शरण्यं शरणं शिवम्' इति तस्यैश्वरं ज्ञानं वर्णयद्व्यासवचनम्, तत्रैवेश्वरगीतान्ते 'नारायणोऽपि भगवान्देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम्' इति तामीश्वरगीतार्थनिबन्धनरूपामुपवर्णयद्व्यासवचनं च स्पष्टीकरोति । 'सर्वकारणमीशानः साम्बः सत्यादिलक्षणः । न विष्णुर्न विरिञ्चिश्च न रुद्रो नापरः पुमान् ॥ श्रुतयश्च पुराणानि भारतादीनि सत्तम । शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि' इत्यादिपराशरपुराणादिवचनं च श्रुतिस्मृतिपुराणादिषु देवतान्तरमधिकृत्य प्रवृ-

त्तानां कारणत्ववादानां सर्वेषामपि शिवविषयत्वं स्पष्टमाचष्टे । तस्माद्देवतान्तरकारणत्वप्रतिपादकानामेव परशिवे पर्यवसानम्, न तु तत्र कारणत्वप्रतिपादकानामन्यत्र पर्यवसानम् ॥

यत्तु 'एको ह वै नारायण आसीत्' इत्यादिश्रुतिषु नारायणस्य प्रपञ्चस्रष्टृत्ववचनम्, तत्कचित्कल्पविशेषे कल्पादौ प्रथमं परमशिवादुत्पन्नस्य नारायणस्य तदितरप्रपञ्चस्रष्टृत्वपरतया योजयितुं शक्यत्वात्, न कथंचिदपि परमशिवस्य परमकारणत्वाङ्गीकारेण सह विरुध्यते; महोपनिषदि 'एको ह वै नारायण आसीत्' इत्यस्य 'प्रादुरासीत्तमोनुदः' इत्युपबृंहणानुसारेण सर्गाद्यसमये ब्रह्मरुद्रादेरुत्पत्तेः पूर्वम् एकः असहायः नारायणः परमशिवादासीत् उत्पन्नः— इत्यर्थप्रतीतेश्च, महोपनिषदि प्रतिपादितस्य भूतेन्द्रियादिसृष्टिक्रमेण सलिलमध्ये सृष्टे ब्रह्माण्डे नारायणेन चतुर्मुखः सृष्ट इत्यादेरर्थजातस्य मानववचनेष्वपि 'महाभूतादिवृत्तौजाः इत्यादिना तथैव प्रतिपादनेन तेषां तन्मूलकतया तदुपबृंहणत्वस्य स्पष्टत्वात्। तस्मात्सर्वश्रुतिस्मृतिपुराणाद्यनुरोधेन परमशिवस्य जगज्जन्मादिकारणत्वव्यवस्थितेः स एव परं ब्रह्म । अत एव मन्त्रवर्णः— 'ऋतं सत्यं परं ब्रह्म' इति; अस्य

हि मन्त्रस्य 'विरूपाक्षम्' इत्यभिधानश्रुत्या, 'नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम्' इति कौर्मे शिवनमस्कारे विनियोगेन, 'अथातो महादेवस्य पादोदकविधिं व्याख्यास्यामः' इत्युपक्रम्य 'ऋतं सत्यमिति मन्त्रेण प्राशयेत्' इति बोधायनसूत्रे शिवपादोदकप्राशने विनियोगेन, 'अथ वा परमात्मानं परमानन्दविग्रहम् । गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् । ब्रह्म ब्रह्मपुरे गार्गि दहराब्जखमध्यमे । अभ्यासात्संप्रपश्यन्ति सन्तस्त्वं च तथा कुरु' इति योगयाज्ञवल्क्ये पूर्वतरानुवाकविहितशैवदहरविद्योपास्यरूपसमर्पकतया तदेकवाक्यतया स्फुटीकरणेन व्यक्तं शिवपरत्वम् ॥

यत्तु 'नारायणपरं ब्रह्म' इति, तदपि नारायणस्य शिवाभेदपक्षे न कथं चिद्विरुध्यते; भेदपक्षे तु नारायणस्य परब्रह्मभावभावनासिद्धतद्भावोपवर्णनपरतया नेयम्; एकस्यां विद्यायामुपास्योपासकभावेन प्रधानोपसर्जनतया निबद्धयोस्तयोर्वस्तुतः परब्रह्मभावायोगे सति अङ्गगुणविरोधाधिकरणन्यायेनोपसर्जने तद्भावोपवर्णनस्यैव अमुख्यतया नेयत्वात् । 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यधिकरणे हि एकाहादिदीक्षापक्षेषु दीक्षणीयासोमयागयोरन्यतरस्य यदीष्ट्यादिवाक्यप्राप्तपर्वकालत्वस्यासंभवादावश्यिके त्यागे प्रधानानुग्रहस्योचि-

तत्वाद्गुणभूताया दीक्षणीयाया एव तत्याग इति निर्णीतम् । नारायणात्परं ब्रह्म इति पाशुपतव्याख्यानेऽपि न दोषः; प्रधानानुरोधेनात्रैवमर्थव्यवस्थितौ, 'नारायणः परं ब्रह्म' इति श्रुत्यन्तर एव 'सुपां सुलुक्' इति सूत्रेण पञ्चम्याः स्वादेश-कल्पनसंभवात्, 'अहमेव परं ब्रह्म' इत्यादिलैङ्गे श्रुतस्य च महालिङ्गप्रादुर्भावात्पूर्वं ब्रह्मनारायणयोरहमेव सर्वोत्कृष्ट इति परस्परविवादप्रस्तावे पठितस्य तदनन्तरं तद्विवादप्रशमना-र्थाविर्भूतमहालिङ्गमध्यसंनिहितस्य पशुपतेः 'पश्यतं मां महाभागौ भयं सर्वं विमुच्यताम् । युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ । त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णु-भवाख्यया ॥ सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः । संमोहं त्यज विष्णो त्वम्' इत्यादितत्त्वोपदेशेनापोदितस्य ब्रह्मोत्क-र्षवचनजातस्येवार्थं तथात्वाव्यवस्थापकत्वात् ॥

एवं श्रुतिसिद्धं शिवस्य ब्रह्मभावं सर्वज्ञशिखामणिर्भगवा-न्बादरायणाचार्योऽपि ब्रह्ममीमांसायाम् अङ्गुष्ठवाक्यस्य शिव-वाचकादीशानशब्दाद्ब्रह्मपरत्वनिर्णयेन, महाभारते 'युधि-ष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा । माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ देवानां दैवतं विष्णुर्विप्राणामग्निर्ब्रह्म च । नारीणां दैवतं भर्ता

शूद्राणां ब्राह्मणो विदुः' इत्यादिप्रदेशेषु शिवे निरुपपदब्रह्म-पदप्रयोगेण च स्वाभिमतं स्पष्टं चकार । 'युधिष्ठिरो धर्म-मयः' इति श्लोके हि कृष्णस्य साहचर्याद्ब्राह्मणानुग्रहाच्च पाण्डवानां जय आसीदिति प्रसिद्धेः, तज्जयोपायभूतस्य कृष्णस्य तथाभूतानां ब्राह्मणानां च मध्ये तद्वदेव मूलत्वेन निरूप्यमाणो ब्रह्मशब्दार्थोऽपि तथाभूत एव ग्रहीतुं युक्तः, स च पारिशेष्यादौचित्याच्च शिव एवेति निश्चीयते । मोक्षधर्मे 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून् । अप्रमेयप्रभावं तं देवदेवमुमापतिम् ॥ भजस्व प्रयतो नित्यं विश्वेशं हरम-व्ययम्' इति पार्थं प्रति कृष्णवचनेन, आश्वमेधिके च 'वयं सर्वे च तद्भक्ताः स चास्माकं प्रसीदति । तत्प्रसादाद्वयं राज्यं प्राप्ताः कौरवनन्दन' इत्यारभ्य 'कस्तां सेनां महाराज मन-सापि प्रधर्षयेत् । द्रोणकर्णमुखैर्गुप्तां महेष्वासैः प्रहारिभिः ॥ ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् । तस्यैव च प्रसा-देन निहताः शत्रवस्तव' इति युधिष्ठिरं प्रति भीमसेन-वचनेन, पाद्मपुराणे 'तत्रास्य मायिनो विष्णोरंशः कृष्णो हि तिष्ठति । दर्शयिष्यत्युपायांस्ते स वः पक्षे ममाज्ञया' इति पार्थं प्रति परित्यक्तकिरातवपुषः शिवस्य वचनेन च, शिवप्रसादादेव पाण्डवानां जयो वृत्त इत्यस्यार्थस्य स्पष्ट-

स्वात्, 'यतो धर्मस्ततो जयः' इति धर्मस्य जयमूलत्वप्र-सिद्धेः तत्प्रमितिद्वारा जयोपायभूतस्य ब्रह्मशब्दार्थस्य वेदस्य सद्भावेऽपि चेतनैरेवावयवैरिह सावयवरूपकसंपादनादत्रत्य-ब्रह्मशब्दस्य चेतनपरत्वावश्यंभावेन शब्दपरत्वायोगात्; तथा 'देवानां दैवतं विष्णुः' इत्यादिश्लोके ब्रह्मशब्दार्थोऽपि शिव इत्यवसीयते । 'त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि' इति छन्दोगोपनिषदि 'नृपाणां दैवतं विष्णुस्तथैव च पुरंदरः । विप्राणामग्निरादि-त्यो ब्रह्मा चैव पिनाकधृत् ॥ तस्मात्सर्वप्रयत्नेन प्राप्य माहे-श्वरं युगम् । विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत्' इत्या-दिकौर्मादिवचनेषु शिवस्य ब्राह्मणदेवतात्वप्रतिपादनात् । एवं शिवस्य परब्रह्मभावव्यवस्थितेः यत्परेषां देवतान्तरस्य तत उत्कर्षकल्पनम्, शिवस्य तत्सृज्यत्वतन्नियम्यत्वकल्पनं वा तत्सर्वं गर्भस्रावेण निरस्तम्; 'अग्निर्वै देवानामवमः' इत्या-दिदीक्षणीयार्थवादस्तु 'विरोधे गुणवादः स्यात्' इति न्या-येन स्तावकतया यथाकथंचिन्नेतव्यः ॥

ननु अग्नेरवमत्वस्य विष्णोः परमत्वस्य तदितरसर्वदेवतानां तन्मध्यगतत्वस्य च वस्तुवृत्तत्वाभावे 'अग्निरवमो देवतानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षेत' इति

श्रुतं दीक्षणीयाया: सोमे यक्ष्यमाणसर्वदेवता परिग्रहार्थत्वं न सिध्येत्; तदसिद्धौ च पूर्वतन्त्रे 'ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात्' इत्यधिकरणे सिद्धस्य सोमाङ्गभूतास्विष्टिषु देवतापरिग्रहार्थमग्न्यन्वाधानं न कर्तव्यं सोमे यक्ष्यमाणसर्वदेवतापरिग्रहार्थया दीक्षणीययैव प्रसङ्गादङ्गभूतास्वपि देवतापरिग्रहसिद्धेरिति निर्णयस्य संकर्षकाण्डे दीक्षणीयां निर्धार्याग्निसाध्ये तत्संस्कारसंयोगाद्देवतान्तरग्रहणं श्रूयते' इत्यधिकरणे सिद्धस्य सोमे दीक्षणीयायां विहृतस्यैवाग्ने: सोमयागार्थं धारणं न प्रतिकर्मोद्धारणं दीक्षणीयापरिगृहीतदेवतारोपितसंस्कारसंयोगादिति निर्णयस्य च बाध: स्यादिति चेत्, न; 'अग्निरवमो देवतानां विष्णु: परम:' इत्यंशे प्रबलानेकश्रुतिविरोधादुपचरितार्थत्वेऽपि दीक्षणीयाया देवतापरिग्रहार्थत्वप्रतिपादनांशे विरोधाभावेन स्वार्थे प्रामाण्याङ्गीकारसंभवात् ॥

ननु अग्नाविष्ण्वोरधरोत्तरत्वाभावे उभयत: परिग्रहालाभात्सर्वदेवतापरिग्रहो न सिध्यतीति चेत्, न; तयोरधरोत्तरकोटित्वेनोभयत: परिग्रहलाभेऽपि तदसिद्धितादवस्थ्यात्। न ह्यधरोत्तरकोटिभूतदेवताद्वययजने तन्मध्यगतदेवतान्तरपरिग्रह: सिध्यति; वचनबलादुभयत: परिग्रहेण सर्वदेवताप-

रिग्रह इति चेत्, तर्हि वचनबलादाग्नावैष्णवयजनेन सर्वदेवतापरिग्रहसिद्धिरेवास्तु; तत्र च यथा 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र शूर्पान्नकरणत्वस्य कीर्तनं स्तावकतयैव न तस्य होमसाधनतोपयोगितया, तथाग्नाविष्णवोरवमपरमत्वकीर्तनमिह स्तावकतया न देवतान्तरपरिग्रहौपयिकतयेत्युपपद्यत इति न कश्चिद्विरोधः । वस्तुतः अत्रावमपरमशब्दौ न निकर्षोत्कर्षपरौ, किं त्वाद्यन्तपरौ; 'अग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासीत्' इति मन्त्रे दीक्षणीयाया देवतापरिग्रहार्थत्वप्रतिपादक एव प्रथमोत्तमशब्दाभ्यां तथा स्फुटीकरणात् । तत्र चोत्तमशब्दस्य 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यत्रेव प्रथमशब्दसमभिव्याहारात्प्राथम्यप्रतिकोटीभूतपाश्चात्त्यत्वपरत्वात् 'अग्निरेव तु प्रथमो देवतानाम्' 'अग्निमुखा वै देवाः' इत्याद्यनेकमन्त्रब्राह्मणेष्वग्नेः प्राथम्यप्रतिपादनेनावमशब्दस्य तत्पर्यवसानावश्यंभावाच्च ॥

यत्तु 'तस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' 'एतौ द्वौ पुरुषश्रेष्ठौ प्रसादक्रोधजौ मम' इत्यादिश्रुतिस्मृतिषु रुद्रस्य नारायणसृज्यत्ववर्णनम्, तत्सर्वं कल्पविशेषेषु संहाररुद्ररूपेण ततः प्रादुर्भावपरम्; 'अहं च भवतो वक्त्रात्कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधज-

स्तव पुत्रकः' इति कौर्मे नारायणं प्रति शिवस्य वरदानवचनेन तथा स्फुटीकरणात् ॥

यच्च 'प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः' इत्यादिषु रुद्रस्य ब्रह्मणः प्रादुर्भाववर्णनम्, तदपि लोकसृष्ट्यभिवृद्ध्युपायप्रदर्शनेन ब्रह्मणोऽनुग्रहाय ततः प्रादुर्भावपरम्; 'निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः' इति वायूक्तेः; 'अनादिनिधनो देवश्चैतन्यादिसमन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः' इति भारतोक्तेश्च ॥

यदपि रुद्रस्यान्यनियम्यत्ववचनम्, यथा— 'एतौ द्वौ विबुधश्रेष्ठौ' 'ब्रह्मा स्थाणुर्मनुर्दक्षः' इत्यादि; एवमाद्यपि ब्रह्मनारायणाविर्भूतांशविशेषविषयं हरिक्रोधजत्वविशेषणस्थाणुशब्दादिभिरवसीयते । स्थाणुशब्दो हि चतुर्मुखादाविर्भूतस्य रौद्रावतारविशेषस्य नाम; आदित्यपुराणे तमेव प्रस्तुत्य 'ततः प्रभृति विश्वात्मा न प्रसूते शुभाः प्रजाः । स्थाणुवन्निश्चलो यस्मात्स्थितः स्थाणुरिति स्मृतः' इति तत्र स्थाणुनामनिर्वचनात्। महाभारते सभापर्वणि 'यत्र भूतपतिः सृष्ट्वा' इति श्लोकेन मैनाके उपास्यस्य शिवस्य संनिधानमुक्त्वा

'नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः । उपासते यत्र परं सहस्रयुगपर्यये' इत्यनन्तरश्लोके तदुपासकेषु परिगणनेन, राजधर्मे 'भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः । तस्य तस्य निकायस्य चकारैकैकमीश्वरम् । देवानामीश्वरं चक्रे देवं दशशतेक्षणम्' इत्युक्त्वा 'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः । महात्मानं महादेवं विशालाक्षं सनातनम्' इति शिवनियम्येषु परिगणनेन च स्थाणुविशालाक्षशब्दितस्य रुद्रस्य परमशिवमूर्तिव्यतिरिक्तावतारूपमूर्त्यन्तरत्वस्फुटीकरणाच्च । विशालाक्षशब्देनापि स्थाणुरेवोच्यते ; राजधर्मे एव ब्रह्मप्रणीतं नीतिशास्त्रं प्रस्तुत्य, 'ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः । बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः' इति तत्र तस्य प्रयोगात्, अनन्तरम् 'स देवः सर्वभूतात्मा महादेवः सनातनः । असंख्यातसहस्राणां रुद्राणां स्थानमच्युतम् ॥ युगानामायुषो ह्रासं विज्ञाय भगवाञ्छिवः । संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत' इति तत्संगृहीते नीतिशास्त्रे वैशालाक्षसमाख्याकीर्तनाच्च ॥

यत्र तु पुराणादिषु क्वचिद्रुद्रस्य 'नारायणनियम्यत्वात्' इति वचनेषु अवतारभेदविषयत्वज्ञापकं शब्दलिङ्गादिकं ना-

स्ति, तत्रापि परमशिवस्य तन्नियम्यत्वायोगात् 'वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते । रुद्रस्यासौ हरांशस्य विभूतेरेव केवलम्' इति पराशरपुराणवचनाच्चांशभेदविषयत्वं वज्रलेपायते । तस्मात्सर्वकारणत्वसर्वाधिष्ठातृत्वानन्यनियम्यत्वादिगुणगणयुक्तं ब्रह्म परशिव एवेत्यस्मिन्नर्थे सर्वश्रुतिस्मृतिपुराणानामविप्रतिपत्तेः सदाशिव एव परमपुरुषार्थप्रेप्सुभिरुपासनीयः प्रतिपत्तव्यश्च । 'कारणं तु ध्येयः' 'यो ब्रह्माणम्' इत्यादीनामपि तद्विषयत्वात्, 'यो ब्रह्माणम्' इति श्वेताश्वतरमन्त्रस्य 'नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम् । निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरे' इति कौर्मे परमशिवपूजायामात्मार्पणे विनियोजनेनापि तद्विषयत्वस्य स्फुटत्वात्; अथर्वशिखावसाने 'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य समाप्ताथर्वशिखा' इति सर्वेतरपरित्यागेन परमशिवस्य ध्येयत्वं विधाय इतोऽधिकमुपदेष्टव्यं नास्तीत्यवधारणाय तस्मिन्नर्थे स्वसमाप्तेः स्वयमेव प्रतिपादनाच्चेति सिद्धम् ॥

मथित्वा श्रुतिपाथोधी-
न्न्यायमन्थाविलोडनैः ।
कर्णामृतं सुमनसां
शैवमेतत्समुद्धृतम् ॥



इहोक्तन्यायसच्छाणकषणैर्विमलीकृता ।
चकासयतु भूतेशं त्र्यध्यन्तमणिदीपिका ॥

शिवभक्तिकल्पवल्ली-
मङ्कुरितां मनसि पुण्यबीजबलात् ।
धीराः कुमतिनिदाघा-
द्रक्षत कर्णामृतोक्तिधाराभिः ॥

धाम्ना मुखैर्धृताय
श्रीपतिनान्विष्य लब्धाय ।
शिवलीलामुकुराय
प्रणतिं वाग्ब्रह्मणे कुर्मः ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य-
विश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोः
श्रीमदप्पयदीक्षितस्य कृतौ
शिवकर्णामृते सिद्धान्तसंक्षेपः संपूर्णः ॥

